स-बालप्रबोधन्युपन्यासः

# तर्क-सङ्ग्रहः

श्रीहरयेनमः श्रीहरिभगवत्कृपानुगृहीतेन मानिभक्तितः तर्कसंग्रहस्य व्याख्यां कुर्वे बालप्रबोधनीं तत्रादौ श्रीमदन्नंभट्टः
परमदयालुर्विद्वच्छिरोमणिर्बालबोधाय तर्कसंग्रहाख्यं प्रकरणमारभमाणः आरिप्सितस्य ग्रन्थस्य समाप्तिर्विघ्नोपशान्तिफलकं शि
ष्टाचारप्राप्तं मङ्गलं मङ्गलसंप्रदायप्रवृत्त्यर्थं श्लोकेनोपनिबध्नन् विषयप्रयोजनाधिकारिसंबन्धान् विवृण्वन् ग्रन्थारंभं प्रतिजा
नीते निधायेति विश्वस्य ईशं विश्वेशं विष्णुं हृदि हृत्कमले निधाय ध्यात्वा अन्यथा विभोः सर्वदेशवर्तिनः परमेश्वरस्य प्रय
त्नेन हृद्येव धारणासंभवात् गुरोर्वन्दनं प्रणामं च विधाय कृत्वा अत्र समासे गुरूणामिति बहुवचनं गुरुमहत्त्वद्योतनाय उपन
यनदीक्षाविद्यागुरूणां संग्रहार्थं चावश्यकं बालानां मन्दबुद्धीनां सुखेन बोधाय तर्कसंग्रहः क्रियते इत्यन्वयः तर्क्यन्ते
विचार्यन्ते इति तर्काः सप्तपदार्थास्ते सम्यग् गृह्यन्ते ज्ञायन्ते अस्मिन्निति तर्कसंग्रहो ग्रन्थः स मया क्रियते विरच्यते इत्यर्थः तत्र
बालानामित्यधिकारिकथनं सुखबोधायेति प्रयोजननिर्देशः १ तर्काः सम्यग् गृह्यन्तेऽस्मिन्ननेन तर्का विचारणे।
इतः सप्तपदार्थाः विषयाः प्रतिपाद्यग्रन्थयोः ज्ञाप्यज्ञापकसंबन्धश्च निर्दिष्टः १ आदौ पदार्थान् गणयति द्रव्येति अत्र सप्ते
त्यधिकसंख्याव्याख्याः पदार्थेषु निवारणार्थं ज्ञेयं उद्देशक्रमेण पदार्थान् विभजन् द्रव्याण्याह तत्रेति पदार्थेषु मध्ये
नवैवेत्यन्यानिमित्तमोहृपदनाम द्रव्यप्रतिषेधार्थं एवकारः गुणान्विभजति रूपेत्यादिकर्माणि निर्दिशति उत्क्षेपणे

सम्पादकः

**पण्डितश्रीशिवनारायणशास्त्री**

अन्नम्भट्टीययोः **तर्कसङ्ग्रह-दीपिकयोः** सन्ति पञ्च-त्रिंशत् प्राचीनाष्टीकाः। तासु नैका विद्वद्भिः प्रकाशिता लभ्यन्ते। परं बहवस्त्वद्यापि यत्र-तत्र विदुषां ग्रन्थ-सञ्चयेषु, संस्कृत-विद्यालयेषु, मठेषु, मन्दिरेषु, पुस्तकालयेषु च कोष-रूपेणैव स्थिता भारती-भाण्डागारं संवर्धयन्ति। बह्वीनां च कोषा अपि तावदल्प एव सन्ति। गच्छता कालेन ते कोषा यावन्न काल्यन्ते, तावत्तेषां प्रकाशनं कार्यम्। इयमेव च वास्तविकी सेवा भारत्याः।

इदमेव मनसि निधाय श्रीमता **शिवनारायण-शास्त्रिणा** स्वीय-ग्रन्थ-भाण्डागार-स्थानां परश्शतानां ग्रन्थानां मध्यादद्यावधि प्रकाशमनाप्ते **बाल-प्रबोधनी, उपन्यास** इति प्राचीने द्वे **तर्क-सङ्ग्रहस्य** टीके वैज्ञानिक-रीत्या विविध-कोषाणां तुलनया संशोधिते। न्याय-वैशेषिकयोः समन्वित-परम्परया अध्ययन इमे टीके विशेषेणोपकाराय विदुषां स्याताम्।

विविध-कोषालोचन-पुरस्सरं शोधित-चरोऽपि **तर्क-सङ्ग्रह**-पाठो बहुत्र टीकाऽऽदि-धृत-व्याख्यातात् पाठाद् भिद्यत, इति संशयमापन्नोऽस्मिग्रन्थ इदम्प्रथमतया पाठालोचनस्योच्चतरं सिद्धान्तम् ( Higher Principles of Textual Criticism) आश्रित्य युक्ति-पूर्वकं सुविचार्य शोधितः।

# तर्क-सङ्ग्रहः

('बाल-प्रबोधिनी', 'उपन्यास' इति प्राचीनाप्रकाशित-टीका-युगलेन,
'उल्लास'-नामक-सम्पादकीय-टिप्पण्या च संवलितः)

सम्पादकः

**पण्डित-श्रीशिवनारायण-शास्त्री,**

अध्यक्षः—संस्कृत-विभागः,

किरोड़ीमल-महाविद्यालयः,

दिल्ली-विश्वविद्यालयः, दिल्ली-७

प्रकाशकः

**भारतीय पब्लिशिंग हाउस**

**दिल्ली—वाराणसी**

प्रकाशक: : श्रीभगवान्‌सिंह, एम्. ए.,
भारतीय पब्लिशिंग हाउस,
(१) १६७५, कूचा दक्खिनीराय,
दरियागंज, दिल्ली-६
(२) बी. ६/४५, सोनारपुरम्,
वाराणसी ।



प्रथमं संस्करणम्, ५०० प्रतिरूपाणि ।

प्रकाशन-समय: { भाद्रमास:, २०३१ वि० ।
अगस्त, १९७४ ई० ।

मूल्यम् { पञ्च-दश रूप्यकाणि ।
रू० १५.०० ।

मुद्रणालय: : अमर प्रिण्टिङ्ग् प्रेस,
८/२५, विजयनगरम्, दिल्ली-९ ।

# प्रास्ताविकम्

१. आमुखम्—अन्नम्भट्ट-विरचितस्य तर्क-सङ्ग्रहस्य सन्त्युप-पञ्चत्रिंशाष्टीका:। तासु नैका: खलु विद्वद्भि: प्रकाशिता: पठकानां पाठकानाञ्चोपयोगाय लभ्यन्ते। परं बह्वस्त्वद्यापि कोष-रूपेणैव भारती-भाण्डारं सम्पूरयन्ति। बह्वीनां कोषा अपि अल्प एव सन्ति। गच्छता कालेन ते कोषा यावत्काल्यन्ते, तावत्तेषां प्रकाशनं वास्तविकी सेवा सुर-भारत्या इति मनसि निधाय मया बालप्रबोधिन्युपन्यासेति टीका-युगल-युनस्तर्क-सङ्ग्रह: सम्पाद्य प्रस्तुत:। सुर-भारती-सेवा-व्रतेन, 'भारतीय पब्लिशिंग हाउस्' इत्येतत्प्रकाशनालयाध्यक्षेण, प्राचीन-भारतेतिहास-विषयानुसन्धान-परायणेन, श्रीमता श्री-भगवान्सिंह-वर्मणा स्वीय-प्रकाशनालयेन प्रकाशयितुं स्वीकृतश्चेति परम: प्रमोदा-वसर: सरस्वती-चरण-चञ्चरीकाणाम्।

२. कोषोपलब्धि-विवरणम्—अस्ति खलु हरियाणा-प्रदेशे भिवानी-नगरी प्रथिता विद्वज्जन-निवास-जनितेन यशसा। अस्ति च तत्र स्व-वैदुषी-चकिती-कृत-चतुर्दिग्वासि-बुध-जनं, शास्त्राभ्यास-नैपुणी-हेतुनाऽऽसादिता-चार्येत्युपाह्वं भूसुरकुलम्। तस्मिश्च कुले न्याय-वेदान्त-व्याकरण-धर्मशास्त्र-पुराणेतिहासादि-नैक-विद्याभिर्विद्योति-तान्तस्का बुध-वरा: समये-समये निज-विद्या-पाटवेन भिवानी-नगरी-यशसा दिगन्तरा-लानि सुरभितानि व्यधु:। तेष्वेवैके श्रीमन्तो वासुदेवाचार्य-पादा गत-शत्यां विशेषेण प्र-थिता अभूवन्। तद्विद्याऽभ्यासाभिनिवेश-प्रमाण-भूता: पर:-सहस्र हस्त-लिखिता ग्रन्था अद्यापि तत्कुलजानां गौरवाय राजन्ते नैकेषु तद्वंश्यानां गृहेषु। तेष्वेव कतिपये ग्रन्था मयका परया परमेश-कृपया लब्धा:।

३. बाल-प्रबोधिन्युपन्यासयोरिदम्प्रथमं प्रकाशनम्—एतेष्वप्रकाशितानां प्रका-शनमस्ति मे महानभिलाष:। तदङ्गतयैव तर्क-सङ्ग्रहस्य दीपिका, प्रकाश, सिद्धान्त-चन्द्रोदय, न्याय-बोधिनी, बाल-प्रबोधिनी, उपन्यास इति नैक-टीका-कोष-मध्याद्द्य यावदप्रकाशितयो:, ग्रन्थ-सूचीष्वेव विदितयोर्बालप्रबोधिनी-उपन्यासेति टीकयो: प्रका-शनमुचितं विभाव्य प्रारब्धम्।

४. तर्क-सङ्ग्रहस्यापि पाठ-शोधोऽत्र—श्रीमद्भ्यां यशवन्त-वासुदेवाथल्ये, महादेव राजाराम बोडा इत्यताभ्यां विविध-कोषालोचन-पुरस्सरं शोधितोऽपि तर्क-सङ्ग्रह-पाठो बहुत्र टीकादि-धृत-व्याख्यात-पाठाद् भिद्यत इति तर्क-सङ्ग्रह-पाठोऽपि पाठालोचनस्योच्चतरं सिद्धान्तम् (Higher Principle of Textual Criticism) आश्रित्य सुविचार्य शोधित:। कोषाधारेण पाठालोचने पाठ-भेदा: केवलं प्रदर्श्यन्ते; उपर्युक्तोच्चतर-सिद्धान्ताधारेण तु हेयोपादेयत्व-विचार-पूर्वकं कश्चन पाठो निश्चीयत

इति मन्येऽस्य सिद्धान्तस्य प्रकर्षो विदुषान्न तिरोहितः । बाल-प्रबोधिन्या उपन्यासस्य च पाठ-शोधस्तु मया पाठालोचनस्यावम-सिद्धान्तम् (Lower Principle of Textual Criticism) अनुश्रित्य कोषाणां तुलनया विहितः; तर्क-सङ्ग्रहस्य च पाठ-शोधस्तट्टीका-वृत-व्याख्यात-पाठानां तुलनया पाठालोचनस्योत्तम-सिद्धान्तम् (Higher Principle of Textual Criticsim) अनुसृत्य विहितः । मम परिश्रमोऽत्र कियान् सफल इत्यत्र तु सुधियाम्परितोष एव प्रमाणम् ।

५. टीकयोः कोषाणां विवरणम्—उभयोरपि टीकयोरेकैकः कोषस्तूपर्युक्त-विद्वत्कुलतः प्राप्त-ग्रन्थेषु मम ग्रन्थ-भाण्डारेऽस्ति । एक-कोषाधारेण पाठ-शोधो हि न निर्दोष इति कोषान्तर-प्राप्त्यै प्रयतमानेन, १९७३ ई० वर्षस्य शरदवकाशे काशीङ्गतेन मया वाराणसेय-संस्कृत-विश्वविद्यालयस्य ग्रन्थालये सरस्वती-भवने बाल-प्रबोधिन्या एकः कोषः, उपन्यासस्य च षट् कोषाः लब्धाः ।

बाल-प्रबोधिन्याः (१) अस्मत्कोषः—१०.५"×४.२" परिमितेषु ९ कागज-पत्रेषूभय-पृष्ठयोर्देव-नागर्या शोभनाक्षरैर्लिखिता टीका बाल-प्रबोधिनी । प्रति-पृष्ठं पङ्क्तयः ११, प्रति-पङ्क्त्यक्षर-सङ्ख्या च ४३ । लेखन-कालो न दत्तः । अयङ्कोषः पाद-टिप्पणीषु "अस्मत्कोष" इति सञ्ज्ञया सूचितः ।

(२) सरस्वती-भवन-कोषः—वर्गः ८, प्रवेश-सङ्ख्या ५८६६४, नाम—तर्क-सङ्ग्रहः सटीकः, ग्रन्थकारः—अन्नम्भट्टः, टीका-कारः—रामनारायणः, पत्र-सङ्ख्या —१-१९, पङ्क्तयः १०, पङ्क्तावक्षर-सङ्ख्या—२९, आकारः—१२.६"×७", लिपिः—देवनागरी, आधारः—कागजम्, टीका-नाम—बालप्रबोधिनी इति । अयं "स०कोष" इति सञ्ज्ञया व्यवहृतः ।

उपन्यासस्य (१) अस्मत्कोषः—११"×४.७" परिमितेषु १३ कागज-पत्रेषु, प्रति-पृष्ठम् १३-१४ पङ्क्तिषु, प्रति-पङ्क्ति ४१-४२ अक्षरैर्देवनागरी-लिप्याऽशोभनाक्षरैर्लिखिताऽपूर्णा टीका । 'प्रत्यक्ष-'विवरणान्ते "इति प्रत्यक्षोपन्यासः" इति वचनेन टीका-नाम "उपन्यासः" इति सूच्यते । प्रति-पृष्ठं च पत्र-पार्श्वे "त० टी० उ०" इति लेखोऽप्यस्ति । पाद-टिप्पणीष्वयं कोषः "अस्मत्कोषः" इति सञ्ज्ञितः ।

(२) सरस्वती-भवन-कोषाः—'सरस्वती-भवन उपन्यास-टीकायाः षट् कोषा लब्धा' इत्युक्तमेवोपरिष्टात् । तेषाम्मयाऽऽदि-गता पञ्च कोषाः पाठालोचनाय स्वीकृताः । अन्तिमः षष्ठः कोषस्तु नितान्ताशुद्ध इति कृत्वा नोपयुक्तः । ते चेत्थम्—

स०१ कोषः—सूची-पत्रे प्रवेश-सङ्ख्या ३१९८९, क्रम-सङ्ख्या ८४५, नाम—तर्कसङ्ग्रहोपन्यासः (त. स. टी.), पूर्णः, पत्र-सङ्ख्या १-२०, आकारः १२.३"×४.६", पङ्क्तयः ११, अक्षराणि ४८, लिपिः—देवनागरी, आधारः—कागजम्, न० ४५५१ । मया "स०१" इति सञ्ज्ञितः ।

स०२कोषः—सूची-पत्रे प्रवेश-सङ्ख्या ३०६४९, नाम—तर्कसङ्ग्रहोपन्यासः, अपूर्णः, पत्र-सङ्ख्या १-२२, २४-४३, पङ्क्ति-सङ्ख्या ९, पङ्क्ताक्षर-सङ्ख्या २८, आकारः ८.८"×५.२", देवनागरी, कागजम् । लेखन-कालः वि० सं० १८९५ ।

मया "स०२" इति सञ्ज्ञितः ।

स०३ कोषः—सूची-पत्रे ३३५२४, नाम —तर्कसङ्ग्रहोपन्यासः, पूर्णः, पत्र-सङ्ख्या १-२२, पङ्क्ति-तसङ्ख्या १४, पङ्क्तावक्षर-सङ्ख्या ३६, आकारः १०″×४.५″, देवनागरी, कागजम् ।

स०४ कोषः—प्रवेश-सङ्ख्या ७३१९८, क्रम-सङ्ख्या ७ १/१, तर्कसङ्ग्रहोपन्यासः, अपूर्णः, पत्र-सङ्ख्या १,३-४७, पङ्क्तयः ९, पङ्क्तावक्षर-सङ्ख्या २५, आकारः ९.२″×४.२″, देवनागरी, कागजम् । मया "स०४" इति सञ्ज्ञितः ।

स०५ कोषः—प्रवेश-सङ्ख्या ८५४३६, क्रम-सङ्ख्या ७ ७/६, तर्कसङ्ग्रहोपन्यासः, पूर्णः, पत्र-सङ्ख्या १-२६, आकारः ९.१″×४.५″, पङ्क्तयः ९, अक्षराणि पङ्क्तौ ४३, देवनागरी, कागजम् । लेखन-कालः वि० सं० १९११ । नातिशुद्धः कोषः । अयङ्कोषो मया "स०५" इति सञ्ज्ञितः ।

अनुपयुक्तः कोषः—प्रवेश-सङ्ख्या ५१९७३, क्रम-सङ्ख्या ३ ४/६, तर्कोपन्यासः, आकारः ९.९″×५.२″, पङ्क्तयः ११, पङ्क्तावक्षराणि २७, अपूर्णः ("अन्वय-व्याप्तिमात्रमुक्तौ केवलान्वयि अतिव्याप्तिः" इति-पर्यन्तः) देवनागर्यां कागजे कुलेखेनात्यन्तमशुद्धो लिखितः ।

तर्क-सङ्ग्रह-पाठ-शोधायोपयुक्तानामाधाराणामुल्लेखस्तत्र-तत्र यथाऽऽवश्यकं विहितः । तेषामत्रोल्लेखः पौनरुक्त्यमेवापादयेदिति न क्रियते ।

६. सम्पादन-विषये किञ्चित्—अध्येतृ-जनस्य सौकर्यमनुलक्ष्य तर्क-सङ्ग्रहः १ उद्देश-२ लक्षण-परिच्छेदयोः परिच्छिन्नः । वर्ण्य-विषयानुकूलतया च तत्रानुच्छेदाः (paragraphs) कल्पिताः, अनुच्छेदान्ते च तत्सङ्ख्या समसूचि । अनुच्छेदादौ च सप्त-पदार्थी-गत-वर्ण्य-विषयस्य स्थानं सूचयन्ती सङ्ख्या यथाऽऽवश्यकतं नागराङ्काक्षरै रोमकाङ्कैश्च सूचिता । तत्र प्रथमा सङ्ख्या पदार्थं, द्वितीया पदार्थावान्तर-भेदं, तृतीया च तत्रापि भेदं सूचयति । इतोऽप्यधिकावान्तर-भेद-जाते सूचयितव्येऽपरा अपि सङ्ख्या प्रयुक्ताः । तद्यथा—३८ पृष्ठे ३७ अनुच्छेदस्यादौ (२.१६. ii. क. अ) इति सङ्ख्याया अयमाशयः—२='गुण'-नामक-द्वितीय-पदार्थस्य,१६=षोडशस्य 'बुद्धि'-नामक-भेदस्य ii.=द्वितीयस्य 'अनुभव'-नामक भेदस्य, क=प्रथमस्य 'यथार्थ'-नामक-भेदस्य, अ=प्रथमः 'प्रत्यक्ष'-नामको भेदोऽत्रानुच्छेदे वर्णित इति ।

विराम-चिह्नानि—सुखावबोधाय विराम-चिह्नानां प्रयोगो यथा-यथं विहितः । तेषु योजक-चिह्नस्य ('-' इति hyphen) प्रयोगः समासेऽजन्त-पूर्वपद-हलाद्युत्तरपदवत्स्वेव विहितः । स्पष्टतायायावश्यकत्वे समासेऽपि यत्र-तत्र सन्धिश्छिन्नः शास्त्र-प्रमाणकानां सुधियां रोषाय कल्पमानोऽपि मृष्यतामिति प्रार्थनीयम्मे ।

पाठ-भेद-टिप्पण्यः—पाठ-भेदाः प्रत्यनुच्छेदं प्रसङ्ख्याय पृष्ठाधो-भागे रेखाया अधस्ताद्दत्ताः । तर्क-सङ्ग्रहस्य, टीकानां च पाठ-भेदाष्टिप्पणीषु सूचिताः । यस्मिन्ग्रन्थांशे पाठ-भेदस्तत्रैव टिप्पण्यङ्कान्दातुं प्रायतिषि, पाठभेदांशश्च कृष्णैरक्षरैर्द्वि-गुणोद्धरण-चिह्न-मध्ये प्रादायि [illegible] लाभे समुचितं पाठं निश्चेतुमपि प्रायतिषि । पाठ-

भेद-टिप्पण्य इमा 'उल्लास' इति सञ्ज्ञयाऽभिहिताः ।

**सङ्क्षेपाः**—अध्येतृ-सौविध्यमेवानुरुध्य नाम-सङ्क्षेपाः प्रायेण न प्रयुक्ताः । सप्तैव तु प्रयुक्ताः । ते च – 'द्र०'='द्रष्टव्य'-इति; 'स०१, स०२, स०३, स०४, स०५'=सरस्वती-भवन-कोष-विशेषा येषां विवरणन्तूपरिष्टादवोचम् । 'कोष'-शब्देनात्र हस्त-लिखितः प्राचीनो ग्रन्थोऽभीष्टः । ई० =ईसवीय-सवत्सरः इति ।

**विषयानुक्रमणी**—ग्रन्थान्ते विषयानुक्रमणी विस्तरेण समयोजि । मूल-व्याख्या-प्रसङ्गेन, स्वातन्त्र्येण वा टीकयोर्विचारिता विषया अपि तट्टीका-नाम्ना सूचिताः । टीका-गतम्मूल-व्याख्यान-मात्रन्तु ग्रन्थ-कलेवर-वृद्धि-करत्वादत्र नानुक्रान्तम् ।

**७. टीका-कार-विषये**—टीका-कृदैतिह्य-विषये तु न किञ्चिद्विशेषेण ज्ञायते । **बाल प्रबोधिनी**-कृता श्रीमता **रामनारायणेन** टीकान्ते कतिपय-श्लोकैरात्म-परिचयः प्रादायि । न ततोऽधिकं किञ्चिद्विद्यते । स च ग्रन्थान्तेऽस्त्येवेत्यत्र न पुनरुच्यते । **उपन्यास**-कृतो विषये तु सर्वथैवाज्ञानम् । यत्ने कृतेऽपि न किञ्चिदवेदि तत्र ।

**८. टीका विषये सुधियः प्रमाणम्**—विद्वद्वरेण्यैः श्रीमद्वासुदेवाचार्यैर्महता यत्नेनाधिगतोऽधीतश्च ग्रन्थ-राशिस्सम्प्रति तत्कुलजानामुपेक्षा-भाजनतामितो दैवान्मम करयोर्गोचरो भूत्वा नाशन्नोपेयादिति भावनावता, विद्या-लवस्याप्यभावमात्मनि विभावयता मयका टीका-युगलीयं यथा-मति परिश्रमेण, व्ययेन च संशोध्य, सम्पाद्योल्लास्य विदुषाम्पुरतो विचाराय प्रास्तावि । अत्रत्याः सर्वेऽपि दोषा मन्मति-मान्द्य-मात्र-मूलाः । यदि कश्चिद् गुणोऽत्र स्यात्, स श्रीमद्-वासुदेवाचार्य-चरणाचरित-सरस्वती-पाद-सरोज-सेवाऽऽपादित-पुण्य-राशि-हेतुको, निमित्त-मात्रमहन्तु तत्प्रकाशनायेति नितान्त तनु-मतिरहण्टीकयोर्गुणागुण-विषये किञ्चिद्वक्तुं स्वाधिकार बाह्यं समर्थयमानो मौनमेव मतिमत्तामाकलयामि ।

**९. अनुग्रहोल्लेखः**—महान्तङ्ग्रन्थ-राशि साशी-राशिम्मह्यन्दत्तवत्यै श्रीमदाचार्य-नन्दकिशोर-कुटुम्बिन्यै मे नमो, यदनुग्रहं विना कार्यस्यास्य कारणमेव नाभविष्यत् । काश्याङ्कोषाणां लब्धौ परमं साहाय्यं कृतवद्भ्यः सरस्वती-भवनस्थेभ्यः श्रीमद्भ्यः(१) पण्डित-तारानाथभट्टाचार्य-(२) श्रीप्रसादमिश्रेभ्यश्च प्रणाममुपहरामि । तत्र कोषाणां प्राप्तौ परम-हेतुभ्यो वाराणसेय-संस्कृत-विश्वविद्यालये (१) बौद्ध-विभागे 'रीडर'-पदभाग्भ्यो विद्वत्तल्लजेभ्यः कृपालु-मित्रेभ्यः श्रीमद्रामशङ्करत्रिपाठिभ्यः, (२) पालि-विभागाध्यक्षाचार्येभ्यः प्रातः-स्मरणीयेभ्यो गुरु-वर्येभ्यः पण्डित-श्रीजगन्नाथोपाध्यायेभ्यश्च श्रद्धा-भरितो नमो-वाको मयाऽर्प्यते । कोषाणाम्प्रतिलिपि-करणावसरे वाचकत्वेन साहाय्यमाचरद्भ्यो वाराणसेय-संस्कृत-विश्वविद्यालये (१) शिक्षा-शास्त्र-कक्षाच्छात्रेभ्यः श्रीमद्भ्योऽरविन्दकुमारेभ्यः, (२) उत्तर-मध्यमाच्छात्रेभ्यः श्रीपरमेश्वरगिरिभ्यः, (३) अस्वास्थ्येऽपि साहाय्यं विदधद्भ्यः, प्रयाग-विश्वविद्यालय आङ्ग्ल-भाषाया एम.ए. कक्षा-च्छात्रेभ्यः श्रीनारायणोपाध्यायेभ्यश्च कृतज्ञता-भरिताः, स्नेहाप्लाविताश्चाशिषो मे सन्ति । कोषालोकन-प्रसङ्गेन काशी-निवास-वेलायां तर्क-विषये कठिन-स्थलेषु चर्चायै विश्रान्ति-[illegible] सर्वदा निरलसतया सुलभेभ्यः, सुर-भारती-सेवैक-व्रत-पालन-

पुण्य-जलेनाक्षालिताशय-कषायेभ्यो, वाराणसेय-संस्कृत-विश्वविद्यालये वेदान्त-विभागाध्यक्षाचार्येभ्यः, सतीर्थ्येभ्यः, श्रीमद्भ्यः पण्डित-श्री-देवस्वरूपमिश्रेभ्यः प्रणाम-मुकुलानि साभारमुपायनीक्रियन्ते। नहि बहु-जन-साहाय्यमन्तरेणेदृशानि कार्याणि सुशकानि।

समग्रमपि गार्हस्थ्य-भारं सदा स्वायत्तीकृत्य मामध्ययनायैव सावसरं विदधती, मुद्र्यमाणानां ग्रन्थानामीक्ष्याणां (proofs) शोधने मूलानुसन्धान-साहाय्यमाचरन्ती च गृहिणी मे तारादेवी कोकिला तु मां सततमेवाधमर्णं विधत्ते। तत्साहाय्यं विना तु शिवः शक्त्या हीन इवाकिञ्चित्करतामहमापद्येय।

अनुग्रहोल्लेखोऽयं सर्वथा व्यर्थ एव स्याद्, यदि श्रीयुत-श्रीभगवान्सिंह-महोदयानामाभारोऽत्र न मन्येत। दुर्लभ-सर्व-वस्तुकेऽस्मिन्महार्घता-महाकाले प्रभूतं धनं व्यय्य सुर-भारती-सेवायै बद्ध-परिकरा, मद्ग्रन्थानां प्रकाशनाय सर्वदोङ्कार-व्याहरण-शीला इमे नूनं धन्य-वाद-शतार्हा मम च सुर-गिराऽनुरागवतामखिलानाञ्च।

अक्षर-संयोजनादि-कठिन-कार्येऽपि मोदमनुभवन्तः 'अमर प्रिंटिंग प्रेस्' इत्यस्य मुद्रणालयस्याध्यक्षाः श्रीमन्तः अमरचन्द-हीरालालास्तत्सहयोगिनश्च श्रीमन्तोऽमरसिंह-कुलदीपकुमार-कृष्णचन्द्र-श्रीनाथसिंह-प्रभृतयोऽपि साभारं स्मर्यन्ते।

**१०. त्रुटि-क्षमापणम्**—नितान्त-साधारणोऽल्प-शक्तिरयं जनः। प्रतिक्षणं दत्तावधानतायामपि मानव-सुलभ-दुर्बलता-प्रमादाज्ञानाशक्ति-प्रभृतिभिरनेक-हेतुभिरनेकास्त्रुटयोऽत्र सन्ति। मया विदिताविदितास्ताः सर्वा मर्षयितुमभ्यर्थ्यन्ते, त्रुटीः प्रकाश्योपकर्तुं च प्रार्थ्यन्ते मदाराधनैक-विषया विद्वत्तल्लजाः।

श्रीकृष्ण-जन्माष्टमी, २०३१ वि०, तद्विधेयेन

ई-४/२५, माडल टाउन, भारद्वाज-सगोत्रेण

दिल्ली-६। शिवनारायणशर्मणा

'बाल-प्रबोधिनी', 'उपन्यास'

इति टीका-युगल-युतः

# तर्क-सङ्ग्रहः

अथ 'बाल-प्रबोधिनी,' 'उपन्यास' इति टीका-युगल-युतः

# तर्क-सङ्ग्रहः

(मङ्गलम्)

निधाय हृदि विश्वेशं, विधाय गुरु-वन्दनम् ।
बालानां सुख-बोधाय क्रियते तर्क-सङ्ग्रहः ।। १ ।।

## अथ बाल-प्रबोधिनी

।। श्रीहरये नमः ।।[1]

श्रीहरिं, भगवद्रूपान् गुरून्नत्वाऽतिभक्तितः ।
'तर्क-सङ्ग्रह'-सद्व्याख्यां कुर्वे बाल-प्रबोधिनीम् ।।[2]

तत्रादौ श्रीमदन्नम्भट्टः परम-दयालुर्विद्वच्छिरो-मणिर्बाल-बोधाय तर्क-सङ्ग्रहाख्यं प्रकरणमारभमाणः प्रारिप्सितस्य ग्रन्थस्य (१)समाप्ति-(२)विख्याति-फलकम्, शिष्टाचार-प्राप्तं मङ्गलं (३) मङ्गल-सम्प्रदाय-प्रवृत्त्यर्थं श्लोकेनोपनिबध्नन् (१) विषय-(२) प्रयोजन-(३) अधिकारि-(४) सम्बन्धानाविष्कुर्वन् ग्रन्थारम्भम्प्रतिजानीते 'निधाय०' इति ।

विश्वस्येशं=विश्वेशं=विष्णुं[3], हृदि=हृत्कमले, निधाय=ध्यात्वा—अन्यथा विभोः=सर्व-देश-वर्तिनः परमेश्वरस्य [4]स्व-प्रयत्नेन हृद्यवधारणासम्भवात्, गुरूणां वन्दनं=प्रणामं च विधाय=कृत्वा । अत्र समासे 'गुरूणाम्' इति बहु-वचनं

---

## अथ श्रीतर्कसङ्ग्रह-बालप्रबोधिन्युपन्यासोल्लासः

श्री-राम-पाद-युगली-युगमात्म-निष्ठं, वाणी-प्रदानथ गुरून्मनसाऽर्चयित्वा ।
पाठानुशोधन-कृते 'शिव'-नामकोऽहमुल्लासमाशय-गतं प्रविकाशयामि ।।

१. इतोऽग्रे सरस्वती-भवन-(स०) कोषे "ॐ श्री-श्रीश-गणेश-सरस्वती-गुरु-द्विज-हरितत्त्वविद्भक्तिमद्भ्यो नमः । भगवद्रूप-निखिल-चराचर-प्रपञ्चाय नमः ।" इत्यधिकम् ।। २. स० कोषे " ।। १ ।।" इत्यधिकम् ।। ३. दीपिकायां "विश्वेश्वरं साम्ब-मूर्तिम्०" इति विशेषण-दर्शनादन्नम्भट्टः शैव एवेत्यवसीयत इति मूल-कृदाशय-विरुद्धमेतत् । "शिवम्" इत्युचितम् । तारोदयो द्रष्टव्यः ।। ४. अस्मत्कोषे "स्व" इति

(१) गुरु-महत्त्व-दृष्ट्या'[५] (२.i) उपनयन-(ii) दीक्षा-(iii) विद्या-गुरूणां सङ्ग्रहार्थं चावश्यकम् । बालानां=मन्द-बुद्धीनां सुखेन बोधाय 'तर्क-सङ्ग्रहः[६] क्रियते' इत्यन्वयः । '''तर्क्यन्ते=विचार्यन्ते' इति तर्काः=सप्त पदार्थाः, ते 'सम्यग्गृह्यन्ते=ज्ञायन्तेऽस्मिन्' इति तर्क-सङ्ग्रहो ग्रन्थः; स मया क्रियते=विरच्यते ।'' इत्यर्थः ।

तत्र (१) 'बालानाम्' इत्यधिकारि-कथनम्; (२) 'सुख-बोधाय' इति प्रयोजन-निर्देशः; (३) 'तर्काः सम्यग्गृह्यन्तेऽस्मिन्' इत्यनेन तर्काः=विचार-गोचराः सप्त पदार्था विषयाः; (४) पदार्थ-ग्रन्थयोर्ज्ञाप्य-ज्ञापक-सम्बन्धश्च निर्दिष्टः ॥[७]

## अथ उपन्यासः

[८]श्रीगणेशाय नमः । प्रारिप्सितस्य ग्रन्थस्य [९]परि-समाप्त्यर्थमीश्वर-ध्यानात्मकं मङ्गलं कृतं[१०] 'निधाय' इत्यादिना । ''यस्य देवे परा भक्तिर्यथा देवे, तथा गुरौ ।'' इति[११] वचन-पर्यालोचनं गुरु-वन्दनं च कृतं 'विधाय' इत्यादिना ।

ग्रन्थादौ श्रोतृ-प्रवृत्त्यर्थं[१२] सम्बन्ध-चतुष्टयं वक्तव्यम्[१३] । तदनुक्तावसम्बन्ध-शङ्कया श्रोतृ-प्रवृत्त्यनुपपत्तिः[१४] । अत उक्तं सम्बन्ध-चतुष्टयं (१) विषय-(२) प्रयोजन-(३) सम्बन्ध-(४) अधिकारि-रूपम्[१५]—(१) 'तर्क-सङ्ग्रह'-पदेन विषय उक्तः । (२) 'सुख-बोधाय' इत्यनेन प्रयोजनमुक्तम् । (३) 'बालानाम्' इत्यनेनाधिकार्युक्तः । (४) विषयस्य ग्रन्थस्य च प्रतिपाद्य-प्रतिपादक-भाव-सम्बन्ध[१६] उक्तः । 'बालानाम्' इत्यनेनानुपपत्तिः[१७] ॥ १ ॥

---

नास्ति ॥ ५. तुलनीयं निरुक्तम् १२।७ : एता उ त्या उषसः (ऋग्वेद-संहिता १।९२।१) =''एकस्या एव पूजनार्थे बहुवचनं स्यात् । इति॥ ६. स० कोषे ''०हं'' इति नपुंसक-घटितः पाठः प्रमाद-पाठ एव, मूले पुंस्येव प्रयोग-दर्शनात् ॥ ७. स०कोषेऽत्र ''१ ॥'' इत्यधिकम् ॥ ८. अस्मत्कोषे ''ॐ'' इत्यधिकम् । स० २ कोषे ''श्री···नमः ।'' इतिस्थाने ''श्रीगोपीजनवल्लभो जयति ।'' इति मङ्गल-वाक्यमस्ति ॥ ९. अस्मत्कोषे ''परि'' नास्ति ॥ १०. अस्मदीय-स०३कोषयोरितोऽग्रे ''भवति'' इत्यधिकम् ॥ ११. स० कोषेषु ''इत्यादि-न्यायेन कृतं गुरु-वन्दनं 'विधाय' इत्यादिना ।*'' इति पाठः । *स० १-२ कोषयोः ''इत्यादि'' इति प्रथमा-घटितः पाठः ॥ १२. स० ५ कोषे ''···र्थे अनुस०'' इति पाठः ॥ १३. स० कोषेषु ''भवति'' इत्यधिकम् ॥ १४. स० कोषेष्विदं वाक्यं नास्ति ॥ १५. स० कोषेष्वस्य स्थान इदं वाक्यमुपलभ्यते—''तच्च विषय-प्रयोजनाधिकारि-§सम्बन्ध-रूपं* वक्तव्यम् ।' इति† ...'' । §स० ५ कोषे ''अनु'' ''इत्यधिकम् । *स० १,३,५ कोषेषु ''-रूपा वक्तव्या'' इति बहु-वचन-घटित-पाठः प्रमाद एवेति प्रतिभाति । † स० ४ कोषे 'इति' नास्ति ॥ १६. '''क्रियते' इत्यनेन'' इति भावः ॥ १७. ''उक्ता'' इति सम्बद्धम् । स० कोषेष्विदमनुबन्ध-चतुष्टय-कथनं भिन्न-क्रमेणोपलभ्यते—''(४) 'बालानाम्' इत्यादिना† अधिकारी उक्तः । (२) 'सुख-बोधाय' इत्यादिना† प्रयोजनमुक्तम् । (१) 'तर्क' इत्यादिना† विषय उक्तः ।‡ (३) 'तर्क्यन्ते=प्रतिपाद्यन्तेऽनेन'

(वैशेषिक-मतानुसारेण सप्त-पदार्थोद्देशः)

**(१) द्रव्य-(२) गुण-(३) कर्म-(४) सामान्य-(५) विशेष-(६) समवाया-भावाः (७) [1]पदार्थाः सप्तैव ॥ २ ॥**

(बाल-प्रबोधिनी) **आदौ पदार्थान्गणयति** 'द्रव्य' **इति । अत्र** 'सप्तैव' इति **अधिक-सङ्ख्यायाः पदार्थेषु निवारणार्थं ज्ञेयम्** ॥

(उपन्यासः) पदार्थो लक्ष्यः[2] । पदार्थत्वं लक्ष्यताऽवच्छेदकम् । 'पदस्यार्थः= पदार्थः' इति व्युत्पत्त्या 'अभिधेयत्वं पदार्थ-सामान्य[3]-लक्षणम्[4] ।' इति मनसि निधाय विभागमाह "द्रव्य०[5]" इत्यादिना ।

अत्र 'सप्त'-ग्रहणं नाशङ्कनीयम् । शङ्का-प्रकारश्च[6] —" 'सप्त'-ग्रहणस्य कोऽर्थः ?[7] (१) न्यून-सङ्ख्या-व्यवच्छेदार्थो[8] वा ? (२) अधिक-सङ्ख्या-व्यवच्छेदार्थो[8] वा[9]? (३) 'पदार्थत्वं द्रव्यादि-सप्तान्यतमत्व-व्याप्तम् ।' इति व्याप्त्यर्थो[10] वा ?" इति ।

"(१) न [11]तावदाद्यः, विभागादेव न्यून-सङ्ख्यायाः परिहृतत्वात्[12] । (२) न द्वितीयः, 'अष्टम-पदार्थो नास्ति ।' इति वक्तव्येऽष्टम-पदार्थ-ज्ञानं [13]विना 'अष्टम-

---

इति व्युत्पत्त्या ग्रन्थस्य 'तर्क'-पद$\phi$वाच्य-पदार्थस्य च सम्बन्ध उक्तः । एवं §सम्बन्ध-चतुष्टयस्योक्तत्वान्न‖ प्रेक्षावतां प्रवृत्त्यनुपपत्ति-शङ्का ।" इति। *स० ४ कोषेऽत्र "तत्र" इत्यधिकम् । † "आदिना' इति निरर्थकम् । ‡ स० ४ कोष इतोऽग्रे "तर्क-शास्त्रोक्त-पदार्थानां सङ्ग्रहो यस्मिन्विधि" इत्यधिकम् । $\phi$"वाच्य" इत्यस्य स्थाने "शास्त्रोक्त" इत्यस्ति । §स० ५ कोषेऽत्र 'अनु' इत्यधिकम् । ‖"न प्रे" इत्यतोऽग्रे एकं पत्रं "द्रव्येगु (णादि षट्भेदः ।)" इति ग्रन्थयावत्पाठ-युक्तं नास्ति ॥ १ ॥

१. बोडास एकस्मिन् (G) कोष एवायं पाठो न्यायबोधिनी-बालप्रबोधिन्योरपि व्याख्यातः; इतरत्र तु "सप्त पदार्थाः" इति पाठः । तत्पुष्टौ चाधिक-कोष-संस्करणोपलब्धि विहाय नान्यत्प्रमाणम् । इति G कोष-पाठ एव प्रमाणिततरः ॥ २. स० कोषेषु "पदार्था लक्ष्याः ।" इति बहु-वचन-घटितः पाठः । स चाग्र ईदृशेषु "द्रव्यं लक्ष्यम् ।", "गुणो लक्ष्यः ।", "कर्म लक्ष्यम्", इत्यादि-स्थलेष्वेक-वचन-घटितत्वस्य दर्शनात्, वचन-स्यालक्ष्यत्वाच्च नोचितः प्रतिभाति ॥ ३. स० १-३ कोषयोः "०न्यस्य" इत्यस्ति ॥ ४. स० कोषेषु "उक्तम्" इत्यधिकम् । "इति...माह" इति पाठश्च नास्ति ॥ ५. अस्मत्कोषे "द्रव्यम्" इति पाठः । स च मूलाननुकूलत्वादुपेक्ष्यः ॥ ६. स० कोषेषु "नाश०···च" इतिस्थाने "व्यर्थमिति प्रतिभाति । तन्मन्दम् ।" इत्यस्ति ॥ ७. इदं वाक्यमस्मत्कोषे नास्ति । स० १ कोषे "सप्त-ग्रहणकस्य" इति पाठः, स० २ कोषे च "क" वर्णः पीत-वर्णेन विच्छिन्नः ॥ ८. स० कोषेषु "०दार्थकत्वं" इति पाठः । अग्रे "न आद्यः । ···न द्वितीयः···न तृतीयः ।" इति पुङ्घटितमुत्तर-त्रयमपेक्ष्यात्र पुंस्प्रयोग एव साधीयान् भाति ॥ ९. स० ५ कोषे "वा" नास्ति ॥ १०. स० ५ कोषे "व्याप्ति-लाभार्थं" इति पाठः । "वा" इति तु नास्ति ॥ ११. अस्मत्कोषे "तावद्" इति नास्ति ॥ १२. स० कोषेषु "न्यून-सङ्ख्या-व्यवच्छेदात्" इति पाठः ॥ १३. अस्मत्कोषे "विना···

पदार्थो नास्ति,' इति वक्तुमशक्यत्वात्; अभाव-ज्ञानस्य प्रतियोगि-ज्ञान-हेतुत्वात् । प्रतियोगी (i) यदि ज्ञातः[१४] ? तस्यापि[१५] सप्त-पदार्थवत् परिगणनीयत्वं भवति[१६]; ज्ञानत्वाविशेषात् । (ii) यदि न प्रमितः ? निषेद्धुमशक्यत्वात्[१७] । (३) न तृतीयः सप्तान्य-तमत्वं[१८] = सप्त-भिन्न-भिन्नत्वं वक्तव्यम्; सप्त-भिन्नस्याप्रसिद्धत्वात्, [१९]'तद्भिन्नत्व'-रूप-साध्यस्याप्रसिद्धत्वात् तन्निरूपित-व्याप्तिरप्यप्रसिद्धैव ।" इति ।

[२०]तत्तुच्छम्—'सप्तान्यतमत्वं त्रयान्यतमत्वादिवत् त्रितय-भिन्न-भिन्नत्वम् ।' इति न ब्रूमः अपितु सप्तान्यतमत्वं = द्रव्यादि-सप्त-प्रतियोगिक-भेद-कूटाभाववत्त्वम् । एव च 'द्रव्यादि-सप्त-प्रतियोगिक-सप्त-भेद-कूटाभाववत्त्वं रूपान्यतमत्व-व्याप्तम् ।' इत्य-त्रापि द्रव्यादि-सप्त-प्रतियोगिक-सप्त-भेद-कूटाधिकरण-प्रसिद्धया तदभावेऽप्यप्रसिद्ध, इति वाच्यम्; अभाव-ज्ञानस्य प्रतियोगि-ज्ञान मात्रापेक्षितत्वात् कूटाभावस्य प्रतियोगि-कूट-घटकीभूत-सप्त-भेद-रूप-प्रतियोगिनः प्रसिद्धत्वात् । द्रव्ये षट् भेदः अद्रव्य-भेद इति कूटस्यापि प्रसिद्धत्वात । एवञ्च " 'सप्त'-ग्रहणं 'पदार्थत्वं द्रव्यादि-सप्तान्यतमत्व-व्याप्यम् ।' इति व्याप्त्यर्थकम् ।" इति ध्येयम् ॥ २ ॥

(१. द्रव्य-पदार्थ-विभागोद्देशः)

**तत्र (१.) द्रव्याणि (१-३) पृथिव्यप्तेजो-(४-५) वाय्वाकाश-(६) काल-(७-८) दिगात्म-(९) मनांसि नवैव ॥ ३ ॥**

(बाल-प्रबोधिनी) उद्देश-क्रमेण पदार्थान्विभजन्द्रव्याण्याह—'तत्र' इति ।

---

..."पदार्थो" इति नास्ति ॥ १४. अस्मत्कोष इदं वाक्यम् 'इति प्रतियोगि-ज्ञाने" इत्यस्ति । अग्रे "यदि न प्रमितः ?" इति दृष्ट्वाऽत्र स० कोषस्थ एव पाठः साधीयान् भाति । दीपिकाऽप्यत्रार्थेऽनुकूला ॥ १५. स० २ कोषे "तदा सोऽपि...गणनीयो" इति, स० ५ कोषे "सोऽपि...गणनीयो" इत्येव पाठः ॥ १६. स० कोषेषु "भवति" इति नास्ति । १७. स० कोषेषु "यदि...त्वात् ।" इत्यन्तः पाठो नास्ति । दीपिकाया-मयम्पदार्थो विचारितः ॥ १८. स० कोषेषु "किम् ?" इत्यधिकम् ॥ १९. स० कोषेषु "तद्भिन्न...त्वात्" इति वाक्यांशः "'सप्त-भिन्न-भिन्नत्व'-रूप-सप्तान्यतमत्वस्याप्य-प्रसिद्धत्वात् ।' इति ।" इति वर्तते; "तन्निरू०...प्रसिद्धैव ।" इति वाक्यांशश्च नास्त्येव ॥ २०. अस्यानुच्छेदस्यायम्पाठोऽस्मत्कोषानुसारेण । स० कोषेषु पुनरेवमुप-लभ्यते—"अत्र सप्तान्यतमत्वं चिन्त्यम् ; त्रितयान्यतमत्वादिवत्—'त्रितय-भिन्न-भिन्नत्वम्' इति न ब्रूमः, अपितु 'द्रव्यादि-सप्त-प्रतियोगिक†-सप्त-भेद-कूटाभाववत्त्वम्'। न च 'सप्त-भेद-कूटाधिकरणाप्रसिद्धया कूटाभाव-रूपान्यतमत्वमप्यप्रसिद्धम् ।' इति वाच्यम्; कूटाभावस्य प्रतियोगि-कूटान्तर्गत-सप्त-भेद-ज्ञानमपेक्षितम्; अभाव-ज्ञानस्य प्रतियोगि-ज्ञानापेक्षितत्वात् । 'कूटस्यापदार्थत्वात्कथं प्रतियोगि-ज्ञानम् ?' इति चेत् ? 'द्रव्ये गुणादि-षट्‡-भेदः ...भेदः' इत्यवधेयम् ।।" †स० २ कोषे "भेद-सप्त-कूटा०" इति पाठः । ‡स०३ कोषे "षटभेदः" इति पाठः ॥ २ ॥

'पदार्थेषु' इत्यर्थः । 'नवैव' इत्यन्याभिमत-'तमो'-रूप-दशम-द्रव्य-प्रतिषेधार्थम्[1] 'एव'-कारः[2] ॥

(उपन्यासः) द्रव्यं लक्ष्यम् । द्रव्यत्व लक्ष्यताऽवच्छेदकम् । 'समवाय-सम्बन्धेन गुणवत्त्वं' द्रव्य-सामान्यस्य[3] लक्षणम् । अत्र 'समवाय-सम्बन्धा'नुपादाने कालिक-सम्बन्धेन गुणवत्त्वस्य ध्वंसे सत्त्वादतिव्याप्तिः;[4] अतस्तदुपादानम् । उत्पन्न-विनष्टे द्रव्ये समवाय-सम्बन्धेन गुणवत्त्वाभावादव्याप्तिः; अतो गुण[5]-समानाधिकरण-[6]पदार्थ-विभाजकोपाधिमत्त्वस्य विवक्षितत्वात् । इत्यभिप्रायेण [7]द्रव्य-विभागमाह 'तत्र' इत्यादिना । 'तत्र'='पदार्थेषु मध्ये ।' इत्यर्थः ।

किन्तल्लक्षणम् ? दूषण-त्रय-रहित-धर्मवत्त्वम्[8] । कानि दूषणानि ? (१) अव्याप्ति-(२) अतिव्याप्ति-(३)असम्भवानि । (१) [9]अव्याप्तिर्लक्ष्या । अव्याप्तित्व लक्ष्यताऽवच्छेदकम् । 'लक्ष्यैक-देशावृत्तित्वं' लक्षणम्[10] यथा द्रव्यस्य रूपवत्त्वम्; लक्ष्यैक-देश [11]आत्मन्यभावात् । (२) अतिव्याप्तिर्लक्ष्या । अतिव्याप्तित्वं लक्ष्यताऽवच्छेदकम् । 'लक्ष्य-वृत्तित्वे सत्यलक्ष्य-वृत्तित्व' लक्षणम्[12] । यथा द्रव्यस्य प्रमेयत्वम् । 'लक्ष्य-वृत्ति'-मात्रमुक्तं चेत् ? लक्षणेऽतिव्याप्तिः; अतः 'अलक्ष्य-वृत्तित्वम्' उक्तम् । 'अलक्ष्य-वृत्तित्व'-मात्रमुक्तं[13] चेत् ? असम्भवेऽतिव्याप्तिः; अतः 'सति'-अन्तम् । (३) असम्भवो लक्ष्यः । असम्भवत्वं लक्ष्यताऽवच्छेदकम् । 'लक्ष्य-मात्रावृत्तित्वं'[14] लक्षणम् । यथा द्रव्यस्य गुण-

---

१. स० कोषे "एव" इत्यधिकम् ॥ २. स०कोष इतोऽग्रे पत्रस्योपरि-भागे "(१) प्रमाण-(२) प्रमेय-(३) संशय-(४) प्रयोजन-(५) दृष्टान्त-(६-७) सिद्धान्ता-वयव-(८) तर्क-(९) निर्णय-(१०) वाद-(११) जल्प-(१२) वितण्डा-(१३) हेत्वाभास-(१४) च्छल-(१५) जाति-(१६) निग्रह-स्थानानां तत्त्व-ज्ञानान्निःश्रेयसाधिगमः ।' इति न्यायस्यादि-गत-सूत्रेण बोधित-षोडश-पदार्थ-निवृत्त्यर्थं 'एव'-कारः ।" इति पाठोऽप्यस्ति ॥ ३. स० १-३ कोषेषु "···न्यस्य ल०" इति, स०५ कोषेऽस्मत्कोषे च "···न्य-ल०" इति पाठः ॥ ४. स० २ ग्रन्थे "अतस्तदुपात्तम्" इति, स०५ ग्रन्थे च "अतः समवाय-सम्बन्धोपादानम् ।" इति पाठः ॥ ५. अस्मदीय-स० ५ कोषयोः "-सामा०" इति पाठः ॥ ६. अस्मत्कोषे "यदर्थ-" इति पाठः ॥ ७. अस्मत्कोषे "द्रव्य-" इति नास्ति ॥ ८. स० ५ कोषे "···रहित-धर्मो" इति, अस्मत्कोषे "···रहितं धर्मत्वं" इति पाठः ॥ ९. स० ३ कोषे "अव्याप्ति···भावात् ।" इत्यन्तो ग्रन्थो नास्ति; स० ४ कोषे च "अव्याप्तिर्लक्ष्या । अव्याप्तत्वं" इतिमात्रो ग्रन्थोऽस्ति । इतः परं "लक्ष्य-वृत्तित्वे सत्य०" इत्यस्ति ॥ १०. स० ५ कोषे "लक्षणम्" नास्ति । इतोऽग्रे च "यथा रूपत्वस्य लक्ष्यैकदेश आत्मादावभावात् ।" इति पाठः ॥ ११. स० कोषेषु "आत्मादाव०" इति पाठः । द्रव्येषु रूपवत्त्वं पृथिव्यप्तेजस्स्वेवास्ति, इति 'आदि' पदं यदि देयम्, तदा "वाय्वादौ" इति वक्तव्यम् । "आत्मनि" इति चोपलक्षणम् । इति ध्येयम् ॥ १२. स० ४ कोषे "लक्षणम्" इतिस्थाने "अतिव्याप्तिः" इति पाठः ॥ १३. स० २ कोषे "अलक्ष-वृत्ति-मात्रम्" इति, स० ४ कोषे च "अलक्ष्य-वृत्ति-मात्र चेत् ?"

त्वम्[१५]।

'एतद्दूषण-त्रय-रहित-धर्मवत्त्व[१६] लक्ष्यताऽवच्छेदक-सम-नियतत्वम्।' इति यावत्। सम-नियतत्वं च लक्ष्यताऽवच्छेदक-व्यापकत्वे[१७] सति लक्ष्यताऽवच्छेदक-व्यापकत्वम्[१८]। अस्ति [१९]हीदं लक्षणम्—'गुणवत्त्व'रूप-लक्षणे लक्ष्यताऽवच्छेदकी-भूत-द्रव्यत्वाधिकरण-वृत्ति-लक्षणता घटकीभूत-समवाय-सम्बन्धावच्छिन्न-प्रतियोगिताको [२०]योऽभावो—नहि गुणात्यन्ताभावः, अपितु गुणत्वात्यन्ताभावः—तत्प्रतियोगित्वं गुणत्वे, अप्रतियोगित्वं गुणे; इति व्यापकत्वं सिद्धम्। व्यापकत्वं च लक्ष्यताऽवच्छेद-कीभूत-द्रव्यत्व-सामानाधिकरण्यम्। [२१]तच्च गुणेऽस्ति। इति लक्षण-समन्वयः।

[२२]व्यवहारस्य लक्षणत्वं व्यावर्तकस्य। 'व्यावर्तकस्यैव[२३]' इति चेत्? अव्या-वर्तकीभूताभिधेयत्वादावतिव्याप्तिः; तत्रापि लक्ष्यताऽवच्छेदक-सम-नियतत्वस्य सत्त्वात्। एवं व्यावृतावपि बोध्यम्[२४]। लक्षणस्य (१) व्यावृत्तिर्, (२) व्यवहारो वा प्रयो-जनम्। (१) आद्य-पक्षे[२५] 'व्यावृत्ति-भिन्नत्वे सति, [२६]अभिधेयत्व-भिन्नत्वे सति, लक्ष्यताऽवच्छेदक-सम-नियतत्वं' लक्षणस्य लक्षणम्। (२) द्वितीये तु 'तद्भिन्नत्वं' न देयम्; व्यवहार-प्रयोजनत्वस्य तयोरपि सत्त्वात्।

ननु 'दशम-द्रव्यस्य तमसः सत्त्वात् "नवैव" इत्ययुक्तम्[२७]।' इति चेत्? न; तमसो द्रव्यत्वे किम्मानम्? (१) प्रत्यक्षं वा? (२) उत[२८] अनुमानम्? (१)

---

इति पाठः ॥ १४. स० ३ कोषे "लक्ष्य-मात्र-वृत्तित्वं" इति पाठः स्पष्टमेव प्रमाद-पाठः ॥ १५. अस्मत्कोषे "गुणवत्त्वम्" इति मतुँब्घटितः प्रमाद-पाठः; गुणवत्त्वस्य द्रव्य-सामान्य-लक्षणत्वाभ्युपगमात् ॥ १६. अस्मत्कोषे, स० १-२ कोषयोश्च "···धर्म-त्वम्" इति मतुँब्रहितः पाठः। स० ५ कोषे च "···धर्मोपलक्षणम् ॥ लक्षतावच्छेदकं सम०" इति पाठः ॥ १७. स० १, ३-५ कोषेषु "व्याप्यत्वे" पाठः ॥ १८. स० २ कोषे "व्याप्यत्वम्" इति पार्श्व-भागे शोधितः पाठः ॥ १९. स० १-२,४ कोषेषु "हि" इति नास्ति। २०. अस्मत्कोषे "यो" इति नास्ति। अग्रे "तत्प्रतियोगित्वम्" इत्यत्र "तत्"-शब्द-श्रवणादत्र "यत्"-शब्दोऽपेक्षितः ॥ २१. स० कोषेषु "तत्" नास्ति ॥ २२. स० कोषेष्विदं वाक्यमित्थम्—"व्यावर्तकस्य† लक्षणस्य, अव्यावर्तकस्य वा इदं लक्षणम्‡?" †स० १,४ कोषयोः "स्य" इति नास्ति। स० ३, ५ कोषयोः "व्यावृत्तक-लक्षणस्य, अव्यावृतकस्य वा?" इति पाठः। अत्र "इदं" इति वाक्य-शेषो नास्ति। ‡स० १ कोषे "लक्षणत्वम्" इत्यस्ति। २३. स० १ कोषे "एव" नास्ति ॥ २४. स० ४-५ कोषयोः पाठोऽयम्। अन्यत्र सर्वत्र "बोध्या" इति पाठः। अस्मिन्पाठे "अतिव्याप्तिः" इति शेषम् ॥ २५. अस्मत्कोषे "आद्यपेक्षा" इति, स० २ कोषे च 'आद्ये पक्षे" इति पाठः। अग्रे "द्वितीये तु" इति दृष्ट्वाऽत्र "आद्ये" इति सप्तमी-घटित एव पाठ उचितः प्रतिभाति। अधिक-कोष-प्रामाण्यात्तु यथा-धृत-पाठ एवादृतः ॥ २६. स० ४ कोषे "अभि० सति" इत्यन्तं नास्ति ॥ २७. अस्मत्कोषे "इत्युक्तम्" इति पाठः। २८. अस्मदीय-स० ४ कोषयोः "उत" नास्ति। स० ४ कोषे तु "अनुमानं

नाद्यः[२९], तमसि द्रव्यत्वं[३०] प्रत्यक्ष-सामग्र्या न [३१]केनाप्यनुभूयते। (२) न द्वितीयः[२९], तमः पक्षो, द्रव्यत्वं साध्यते, 'रूपवत्त्वात्', 'कर्मवत्त्वाद्वा' हेतुः; रूपवत्ता-प्रतीतिस्तु भ्रान्ति-रेव—तदभाववति तत्प्रकारकत्वात्; कर्मवत्ता-प्रतीतिस्तु[३२] आलोकोपाधिकी [३३]भ्रान्ति-र्नौका-गामिनस्तटस्थ-वृक्ष-गमन-प्रतीतिवत्। इति "नवैव" इति सिद्धम्[३४] ॥ ३ ॥

(२. 'गुण'-पदार्थ-विभागोद्देशः)

**(२.१)रूप-(२)रस-(३)गन्ध-(४)स्पर्श-(५)सङ्ख्या-(६)परिमाण-(७) पृथक्त्व-(८)संयोग-(९)विभाग-(१०-११)परत्वापरत्व-(१२)गुरुत्व-(१३) द्रवत्व(१४)स्नेह-(१५) शब्द-(१६)बुद्धि-(१७)सुख-(१८-१९) दुःखेच्छा-(२०) द्वेष-(२१)प्रयत्न-(२२-२३)धर्माधर्म-(२४)संस्काराश्चतुर्विंशति-र्गुणाः ॥ ४ ॥**

(बाल-प्रबोधिनी) गुणान्विभजति "रूप०" इत्यादि ॥

(उपन्यासः)[१]गुणो लक्ष्यः। [२]गुणत्वं लक्ष्यताऽवच्छेदकम्। 'द्रव्य-भिन्नत्वे सति, कर्म-भिन्नत्वे सति सामान्यवत्त्वं' गुणस्य लक्षणम्[३]। 'द्रव्य-भिन्नत्वे सति सामान्य-वत्त्वं...' इत्युक्तौ कर्मण्यतिव्याप्तिः[४]; तदर्थं 'कर्म-भिन्नत्वम्' [५]इत्युक्तम्। कर्म-भिन्नत्वे सति सामान्यवत्त्वस्य द्रव्ये सत्त्वादतिव्याप्तिः; अतो 'द्रव्य-भिन्नत्वम्'[६]इत्युक्तम्। द्रव्य-कर्म-भिन्नत्वे सति सामान्यवत्त्वस्य ध्वंसे[७] सत्त्वादतिव्याप्तिः; अतः 'समवायेन' इत्यपि वक्तव्यम्। इति गुण-सामान्य-लक्षण-पूर्वकं[८] विभागमाह 'रूप' इत्यादिना[९]।

ननु "मृदुत्व-कठिनत्वयोरतिरिक्त-गुणयोः सत्त्वात् 'चतुर्विंशत्येव'[१०] इत्यनुप-

---

वा? उपमानं वा? शाब्दं वा? अत्र किम्प्रमाणम्?" इति पाठः ॥ २९. अत्र पुंस्त्वं विकल्पाभिप्रायेण स्यात् ॥ ३०. स० ३ कोषे "द्रव्यत्वस्य" इत्यस्ति ॥ ३१. स० २-४ कोषेषु "कोऽप्य०" इति, स० ५ कोषे च 'काऽप्य०" इति पाठः। ३२. स० ४ कोष इतोऽग्रे "भ्रम-रूपा, तदभाववति तत्प्रतीतिवदति नवै०" इति पाठः। स० ५ कोषे च "भ्रान्तिरेव तदभाववति तत्प्रकारकत्वात् ॥ कर्मावता-प्रतीतिस्तु आलोका-पधिरणोपाधिकी भ्रान्तिः।" इति भ्रष्ट-पाठः॥ ३३. स० २ कोषे "भ्रान्तिरेव" इत्यस्ति ॥ ३४. स० ४ कोष इतोऽग्रे "इति द्रव्य-निरूपणम्" इत्यधिकम् ॥ ३ ॥

१. स० ४ कोष इतः प्राग् "गुणान्विभजते।" इत्यधिकम् ॥ २. स० ४ कोष इतोऽग्रे "लक्ष्यता गुणे। लक्ष्यताऽवच्छेदकं गुणत्वम्। लक्ष्यताऽवच्छेदकावच्छिन्न-गुणस्य" इति पाठः ॥ ३. स० ४ कोष इतः प्रारभ्य पत्रमेकं सामान्य-लक्षण-ग्रन्थे "अनेक-समवेतत्व-मा (त्रमुक्तं चेत्?)" इति यावान् पाठो भिन्न-हस्त-लेखे नाति-शुद्धो वर्तते ॥ ४. स० ५ कोषे "अतिव्याप्तः" इति पुङ्घटितः पाठः ॥ ५. स० १-२, ४-५ कोषेषु "इति" नास्ति ॥ ६. स० कोषेषु "इति" नास्ति ॥ ७. अस्मत्कोषे "लब्धांसे" इत्यस्ति ॥ ८. स० १-४ कोषेषु "...पूर्वक-वि०" इति पाठः। कर्म-लक्षणेऽनुस्वार-घटित-पाठ-दर्शनादत्रापि यथोक्त-पाठ एव साधीयान् ॥ ९. अस्मत्कोषे "इत्यादि" इति प्रथमा-घटित-पाठः। कर्म-प्रसङ्गेऽस्मिन्नेव कोषे तृतीया-घटित-पाठ-दर्शनाद्यथा-मुद्रित-पाठ एव साधीयान् भाति ॥ १०. अस्मत्कोषे "'चतुर्विंशति' इत्येवानुप०"

पन्नम् ।" इति चेत् ? न; तयोरवयव-संयोग-विशेष-रूपत्वात् 'चतुर्विंशत्येव' इति सिद्धम् ॥ ४ ॥

(३ 'कर्म'-पदार्थ-विभागोद्देशः)

**(३.१-५) उत्क्षेपणाप[1]-क्षेपणाकुञ्चन-प्रसारण-गमनानि पञ्च कर्माणि ॥ ५ ॥**

(बाल-प्रबोधिनी) कर्माणि निर्दिशति 'उत्क्षेपण०' इत्यादि ॥

(उपन्यासः) [2]कर्म लक्ष्यम् । कर्मत्वं लक्ष्यताऽवच्छेदकम् । 'संयोग-भिन्नत्वे सति संयोगासमवायि-कारणत्वं' कर्मणो लक्षणम् । [3]संयोगेऽतिव्याप्ति-वारणाय 'संयोग-भिन्नत्वम्'[4] इत्युक्तम् । 'संयोग-भिन्नत्व'-मात्रोक्तौ[5] घटादावतिव्याप्तिः; अतः[6] 'संयोगासमवायि-कारण०' इति[7] । कर्म-सामान्य-लक्षण-पूर्वकं कर्मणो विभागमाह 'उत्क्षेपण०' इत्यादिना ।

ननु "भ्रमणादीनामतिरिक्तानां[8] कर्मणां सत्त्वादयुक्तं 'पञ्चैव' इति चेत् ?[9] न; "तेषां[10] गमनेऽन्तर्भावः ।" इति चेत् ? तर्हि उत्क्षेपणादीनामप्यस्तु गमनेऽन्तर्भावः[11] । तेषामतिरिक्तत्वे त्विच्छैव[12] नियामिका—स्वतन्त्रेच्छस्य[13] मुनेर्नियोग-[14]परियोगानर्हत्वात् । इति 'पञ्चैव' इति सिद्धम्[15] ॥ ५ ॥

(४. 'सामान्य'-विभागोद्देशः)

**(४.१) '[1]परम्, (२) अपरं च' इति द्विविधं सामान्यम् ॥ ६ ॥**

(बाल-प्रबोधिनी) सामान्यमाह 'परम्' इत्यादि ॥

(उपन्यासः) सामान्यं लक्ष्यम् । सामान्यत्वं लक्ष्यताऽवच्छेदकम् । 'नित्यत्वे

---

इति पाठः । क्लीबत्वं चिन्त्यम् ॥ ४ ॥

१. केषुचित्कोषेषु "अव-क्षे०" इति पाठः ॥ २. स० ४ कोषे इतः पूर्वं "कर्माणि विभजते ।" इत्यस्ति ॥ ३. स० ४ कोष इदं वाक्यं "सगो (संयोग ?)-समवायि-कारणत्व-मात्रमुक्तौ संयोगे अतिव्याप्ति तद (द् ?) वारणाय···" इत्यस्ति ॥ ४. स० ५ कोष इदं "संयोग-भिन्नत्वे सति" इत्यस्ति ॥ ५. स० ४ कोषे "मात्रमुक्तौ" इति पाठः ॥ ६. स० ४ कोषे "अतः" इति नास्ति ॥ ७. स० ४ कोषे "संयोग० कारणत्वमुक्तम्" इति पाठः ॥ ८. स० ५ कोषे "···रिक्तकर्मणां" पाठः ॥ ९. स० ४ कोषे "चेत् ? न" इति नास्ति ॥ १०. स० ५ कोषे 'तेषां···र्भावः ।' इति वाक्यं नास्ति ॥ ११. स० ४ कोषे "चेत्" अधिकम् ॥ १२. स० १,४ कोषयोः "इहैव" इति, स० २ कोषे च "ईहैव" इति पाठः ॥ १३. स० ४ कोषे "स्वतन्त्रेच्छायाः" इति वर्तते । 'मुनेः" इत्यस्मत्कोषे स० ३ कोषे च नास्ति ॥ १४. अस्मत्कोषे "पर्यनु०" इति पाठः ॥ १५. अस्मत्कोषे "सिद्धं" नास्ति ॥ ५ ॥

१. मलापुरीय श्रीचन्द्रशेखरशास्त्रिगलसंस्करणे वाक्यमिदं "सामान्यं द्वि-विधं परमपरं चेति ।" इति वर्तते । दीपिका-बालप्रबोधिनी-वाक्यवृत्तिषु प्रतीकं, बोडा-

सति, एकत्वे[2] सत्यनेक-समवेतत्वं सामान्यस्य[3] लक्षणम् । 'अनेक-समवेतत्व'-मात्रमुक्तं चेत् ? संयोगादावतिव्याप्तिः; अतः 'एकत्वे[4] सति' इत्युक्तम् । 'एकत्वे[5] सति समवेतत्वम्' इत्युक्ते गगन-परिमाणादावतिव्याप्तिः; अतः 'अनेक'-इत्युक्तम् । 'एकत्वे[6] सत्यनेक-समवेतत्वम्' [7]इत्युक्तेऽपि घटादावतिव्याप्तिः; अतो 'नित्यत्वम्' इत्युक्तम् । 'समवाय'-पदानुपादाने नित्यत्वे सत्यनेक-वृत्तित्वस्यात्यन्ताभावे सत्त्वादतिव्याप्तिः; अतस्तदुपादानम् ।

तद् 'द्वि-विधं' '(१) परम्, (२) अपरं च' इति—(१) परं[8]=सत्ता, (२) अपरं=द्रव्यत्वादिः'[9] इति ज्ञेयम्[10] ॥ ६ ॥

(५. 'विशेष'-पदार्थोद्देशः)

**(५.) नित्य-द्रव्य-वृत्तयो विशेषास्त्वनन्ता एव ॥ ७ ॥**

(बाल-प्रबोधिनी) विशेषं कथयति 'नित्य०' इत्यादि ॥

(उपन्यासः) विशेषो लक्ष्यः । विशेषत्वं लक्ष्यताऽवच्छेदकम् । '[1]स्वतो व्यावर्तकत्वं' लक्षणम् । [2]तेषामाश्रयः परमाण्वादिः । परमाण्वादीनामानन्त्यात्[3] तेषामप्यानन्त्यमिति सिद्धम् ॥ ७ ॥

(६. 'समवाय'-पदार्थोद्देशः)

**(६) समवायस्त्वेक एव ॥ ८ ॥**

(बाल-प्रबोधिनी) समवायं[1] वक्ति 'समवाय०' इति ॥

(उपन्यासः) [2]समवायो लक्ष्यः । समवायत्वं लक्ष्यताऽवच्छेदकम् । 'नित्यत्वे सति सम्बन्धत्वं'[3] लक्षणम् । 'नित्यत्वा'नुपादाने संयोगेऽतिव्याप्तिः, 'संयोग-समवाया-

---

इत्युपेक्ष्यः श्रीशास्त्रिगलपाठः ॥ २. स० ५ कोषे "एकत्वे सति" इत्यत्र नास्ति, अग्रे पद-कृत्यावसरे तु वर्तते ॥ ३. "सामान्यस्य" इति स० ४ कोष एवास्ति । द्रव्य-गुण-कर्मणां व्याख्यानेषु तु "द्रव्यस्य", "गुणस्य", "कर्मणः" इति यथा-यथं लभ्यते; परमग्रे विशेष समवायाभावानां व्याख्याने तत्तत्पदानां षष्ठी-घटित रूपं तत्र-तत्र नास्तीति तावदिहापि पदमिदमारोहति संशय-पदवीम् ॥ ४. अस्मत्कोषे "नित्यत्वे सति समवेतत्वम्" इति पाठः ॥ ५. अस्मत्कोषे "एकत्वे···इत्युक्ते" इति नास्ति ॥ ६. अस्मत्कोषे "एकत्वे···इत्युक्तम्" इति नास्ति ॥ ७. स० ३-४ कोषयोः "इति" नास्ति ॥ ८. स० ४ : "परा" । ९. अस्मत्कोषे "द्रव्यत्वादीति" इति, स० १, ५ कोषयोः "द्रव्यत्वादिति" इति, स० २-४ कोषेषु तु यथा-धृतः पाठः ॥ १०. अस्मदीय-स०३ कोषयोः "ज्ञेया" इत्यपपाठः ॥ ६ ॥

आदिक-संस्करणेषु पाठश्च यथा-धृते एव स्तः ।

१. स० ३ कोष इतः प्रारभ्यात्रत्य-ग्रन्थ-शेषो नास्ति । स० ४ कोषे "स्वतो" इतिस्थाने "अस्य" इत्यस्ति ॥ २. स०४ कोषे "तेषामाश्रयादीनामानन्त्यात्" इति पाठः ॥ ३. अस्मत्कोषे "अपि" इत्यस्य स्थाने "इति" इति वर्तते ॥ ७ ॥

१. अस्मत्कोषे "असमवायं" इत्यपपाठः ॥ २. स० ३ कोषे "सम०···छेदकम् ।" इति पाठो नास्ति ॥ ३. स० ४ कोषे इतः प्राग "अस्य" इत्यधिकम् ॥

न्यतरत्व'-रूप-सम्बन्धत्वस्य [4]तत्रापि सत्त्वात्; अतस्तदुपादानम् । 'सम्बन्धत्वा'नुपादाने गगनादावतिव्याप्तिः, नित्यत्वस्य तत्रापि[5] सत्त्वात्; अतस्तदुपादानम् ॥

तत्सत्त्वे किम्प्रमाणम्—(१) प्रत्यक्षं वा ? (२) उतानुमानम्[6] ? (१) नाद्यम्, प्रत्यक्ष-सामग्र्यभावात् । (२) द्वितीयन्तु 'गुण-क्रियाऽऽदि-विशिष्ट-बुद्धिर्विशेषण-विशेष्य-सम्बन्ध-विषया, विशिष्ट-बुद्धित्वाद्, 'दण्डी पुरुष' इति विशिष्ट-बुद्धिवत्[7] ।" इत्यनुमानमिति ध्येयम् ॥ ८ ॥

(७. 'अभाव'-पदार्थ-विभागोद्देशः)

**(७.) अभावश्चतुर्विधः—'(१) प्रागभावः, (२) प्रध्वंसाभावः, (३) अत्यन्ताभावः, (४) अन्योन्याभावश्च' इति ॥ ९ ॥**

**(बाल-प्रबोधिनी)** अभावं वदति 'अभाव' इत्यादि ॥

**(उपन्यासः)** अभावो लक्ष्यः । अभावत्वं लक्ष्यताऽवच्छेदकम् । '[1]द्रव्यादि-षट्-प्रतियोगिताकाभाववत्त्व[2]' लक्षणम् । तत्प्रमाणं तु 'नास्ति' इति प्रतीतिरेवेति ध्येयम् ॥ ९ ॥

---

४. स० ४ कोषे "तत्रासत्त्वात्" इति पाठः ॥ ५. स० १ कोषे "अन्यत्रापि" इत्यस्ति ॥ ६. अस्मत्कोषे, स० १ कोषे चेदं नास्ति; स० ४ कोषे तु "उपमानं वा ? अनुमानं वा ? शाब्दं वा ?" इति पाठः ॥ ७. अस्मत्कोषे "विशेषण" इति, "पुरुष" इति च नास्ति । स० ४ कोषे चेदं वाक्यं "गुणादि-विशिष्ट-बुद्धिवत् ।" इत्यस्ति; "विशिष्ट-बुद्धिर्विशेषण० इति" इत्यंशस्तत्र नास्तीति यावत् । स० ५ कोषे च "इति" इति नास्ति ॥ ८ ॥

१. स० ४ कोषे "द्रव्यत्वादि" इति पाठः ॥ २. अस्मत्कोषे "···यौगिकभाव०" इति, स० ५ कोषे च "···काभावत्वं" इति पाठः ॥ ३. स० ४ कोषे "बुद्धि" इति, अस्मत्कोषे च "नास्तीति ध्येयम्" इति, स० ५ कोषे च "प्रतिरेव०" इति पाठः ॥ ९ ॥

अन्नम्भट्टस्य विदुषः कृतौ वै तर्क-सङ्ग्रहे ।
अप्रकाशित-पूर्वे ये टीके पाण्डुलिपि-स्थिते ॥ १ ॥
संशोध्योल्लासिते यत्नात्कोषान्त्सम्मेल्य वै बहून् ।
तत्रोद्देश-परिच्छेदः शिवानुग्रह-कारणात् ॥ २ ॥
शुभे खाग्नि-ख-नेत्राब्दे[२०३०] वैक्रमे कार्तिके सिते ।
स-सोमैकादशी-रात्रौ निशीथे पूर्णतामगात् ॥ ३ ॥

इति श्रीतुलसीरामशर्मात्मज-श्रीश्रीनिवासशर्म-शास्त्रि-सूनु-
श्रीशिवनारायणशर्म-शास्त्रि-कृतौ
श्रीतर्कसङ्ग्रह-बालप्रबोधिन्युपन्यासोल्लासे
प्रथम उद्देश-परिच्छेदः पूर्णः ॥ १ ॥

(अथ लक्षण-परिच्छेदे १.१ पृथिवी-द्रव्य-लक्षणम् )

**(१.१) तत्र[1] गन्धवती पृथिवी। सा (क) द्वि-विधा—(i) नित्या, (ii) अनित्या च। (i) नित्या परमाणु-रूपा; (ii) अनित्या कार्य-रूपा। (ख) पुनस्त्रिविधा—(i) शरीर-(ii) इन्द्रिय-(iii) विषय-भेदात्। (i) शरीरमस्मदादीनाम्; (ii) इन्द्रियं गन्ध-ग्राहकं घ्राणं[2] नासाऽग्र-वर्ति; (iii) विषयो मृत्पाषाणादिः ॥ १० ॥**

(बाल-प्रबोधिनी) पृथिव्या लक्षणमाह 'गन्धवती' इति। (१-३) अतिव्याप्त्य-व्याप्त्यसम्भव-दोष-त्रय-रहितः स्वरूप-वाचकः शब्दो = लक्षणम्। यथा—गोः 'शृङ्गित्वे सति [3]सास्नावत्त्वम्'। (१) अलक्ष्ये लक्षणागमनम्[4] = अतिव्याप्तिः। यथा—गोः 'शृङ्गित्वम्'; तन्महिष्यादावलक्ष्येपि वर्तते। (२) लक्ष्यैक-देश-वृत्तित्वे सति देशान्तरावर्तनम् = अव्याप्तिः, यथा—गोः 'कपिलत्वम्'; तच्च गोषु वर्तमानमपि न सर्वत्र वर्तते। (३) लक्ष्येऽवर्तनम् = असम्भवः। यथा—गोः 'एक-शफत्वम्'; तच्च न गोषु कुत्रापि वर्तते। इति ॥

'तत्र गन्धवती' इति 'गन्धवज्जातीया' इत्यर्थः; अन्यथा द्रव्यं क्षणमगुणं तिष्ठति, क्षणान्तरे गुणा उत्पद्यन्ते, कारणस्य[5] नियत-पूर्व-वृत्तित्वाङ्गीकारादाद्य-क्षणे पृथिव्यां गन्धाभावाल्लक्षणाव्याप्ति-प्रसङ्गः ॥

पृथिवीं विभजति 'सा (क) द्वि-विधा' इति। तत्र (i) परमाणुस्तु = जाल-रन्ध्र-गत-सूर्य-प्रभायां दृश्यमान-त्रसरेणु-षष्ठ-भागः। (ii) कार्यं = द्व्यणुकादि ब्रह्माण्ड-पर्यन्तम्। प्रकारान्तरेण विभजति '(ख) पुनस्त्रि-विधा' इत्यादि। (i) 'अस्मदादीनाम' इति 'आदि'-पदेन जरायुजादि-त्रि-विध-सर्व-शरीर-सङ्ग्रहो विवक्षितः। उद्भिजेषु[6] त्विन्द्रिय-व्यापाराभावात्[7] तेषां विषयान्तः-पातित्वम्। 'वयमादयो येषाम्, ते = अस्मदादयः, तेषाम्' इति समासः; अन्यथा 'त्वमावेक-वचने[8]' इत्येक-वचनाधिकार-पठित-'प्रत्ययोत्तर-पदयोश्च[9]' इति सूत्रेणास्मच्छब्दस्य 'म'-पर्यन्तस्य मच्छब्दादेशापत्तेस्तथा प्रयोगानुपपत्तेः। (ii) 'गन्ध-ग्राहकम्' इति हेतु-गर्भं विशेषणं घ्राणस्य।

---

१. दीपिकायाः कतिपय-कोषेषु, निरुक्तौ, पट्टाभिराम-टिप्पण्यां, दीपिका-प्रकाशे, नृसिंह-प्रकाशिकायां च पदमिदं यथा-यथं प्रतीकत्वेन धृतं व्याख्यातं च। इतरत्र नास्ति। 'प्रक्षेपोऽयम्।' इति श्रीबोडाः ॥ २. केषुचित्सस्करणेषु पृथिवी जल-प्रकरणयोः "तच्च" इत्यधिकम् ॥ ३. अस्मत्कोषे "सास्नादिमत्त्वम्" इति पाठः ॥ ४. अस्मत्कोषे "—गमोऽति०" इति पाठः। अग्रेऽव्याप्त्यसम्भव-प्रसङ्गे ल्युड्-घटित-"अवर्तन"-शब्द-दर्शनादत्रापि स०कोषस्थो ल्युड्-घटितः पाठ एव साधीयान् भाति ॥ ५. अस्मत्कोषे "कारण-नियत०" इति पाठः ॥ ६. स० कोषे "उद्भिज्जेषु" इत्यस्ति ॥ ७. 'तमसा बहु-रूपेण वेष्टिताः कर्म-हेतुना। अन्तः-सञ्ज्ञा भवन्त्येते सुख-दुःख-समन्विताः ॥' (मनु-स्मृतिः १।४९) इति मनु-वचनम्, 'वनस्पत्योषधि-लता-त्वक्सारा, वीरुधो, द्रुमाः। उत्स्रोतसस्तमः-प्राया अन्तः-स्पर्शा विशेषिणः ॥' (श्रीमद्भागवतम् ३।१०।१९) इति व्यास-वचनं चानुरुध्य चिन्त्यमेवैतत् ॥ ८. अष्टाध्यायी ७।२।९७ ॥

  

पृथिवी-विशेष-गुण-'गन्ध-'ग्राहकत्वात्पृथिव्यात्मकत्वम् । इन्द्रिय-स्थानमाह 'नासा०' इति । (iii) [१०]विषयमाह 'विषय' इति ॥ एवमग्रेऽपि सर्वत्रोहनीयम् ॥

(उपन्यासः) पृथ्वी लक्ष्या । पृथ्वीत्व लक्ष्यताऽवच्छेदकम् । 'समवाय-सम्बन्धेन गन्धवत्त्व' लक्षणम् । अत्र 'समवाय-सम्बन्धा'नुपादाने कालिक-सम्बन्धेन जलादावपि सत्त्वादतिव्याप्तिः; अतस्तदुपादानम्; [११]समवाय-सम्बन्धेन जलादौ गन्धवत्त्वाभावान्नातिव्याप्तिः ॥

"पृथिवीत्व-जाति-सिद्धौ किं प्रमाणम् ?" इति चेत्, "गन्धवत्त्वावच्छिन्न-कार्यता-निरूपित-समवायि-कारणता किञ्चिद्धर्मावच्छिन्ना, कारणतात्वाद् घट-निरूपित-दण्ड-निष्ठ-कारणतावत् ।" इत्यनुमानमेव ॥

सा द्वि-धा (i) नित्या, (ii) अनित्या च । (i) नित्यं लक्ष्यम् । नित्यत्वं लक्ष्यताऽवच्छेदकम् । 'प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वं' लक्षणम् । 'सति'-अन्तानुक्तौ ध्वंसेऽतिव्याप्तिः; अतस्तदुक्तम्; प्रागभावाप्रतियोगित्वस्य ध्वंसेऽभावान्नातिव्याप्तिः । 'प्रागभावाप्रतियोगित्व'-[१२]मात्रोक्तौ प्रागभावेऽतिव्याप्तिः; अतो 'ध्वंसाप्रतियोगित्वम्' उक्तम् । (ii) [१३] अनित्यं लक्ष्यम् अनित्यत्वं लक्ष्यताऽवच्छेदकम् । [१४]अनित्यत्वं च 'प्रागभाव-प्रतियोगित्वे सति ध्वस-प्रतियोगित्वम्' । 'प्रागभाव-प्रतियोगित्व'-[१५]मात्रमुक्तं चेत् ? ध्वंसेऽतिव्याप्तिः; अतो ध्वंस प्रतियोगित्वमुक्तम्; ध्वंस-प्रतियोगित्वस्य ध्वंसेऽभावान्नातिव्याप्तिः । 'ध्वंस-प्रतियोगित्व'-[१६]मात्रमुक्तं चेत् ? प्रागभावेऽतिव्याप्तिः; ध्वंस-प्रतियोगित्वस्य प्रागभावे सत्त्वात्[१७]; अतः प्रागभाव-प्रतियोगित्वमुक्तम्; प्रागभाव-प्रतियोगित्वस्य प्रागभावेऽभावान्नातिव्याप्तिः ॥

शरीरं लक्ष्यम् । शरीरत्वं लक्ष्यताऽवच्छेदकम् । 'गन्धवत्त्वे सति शरीरत्वं' लक्षणम् । 'गन्धवत्त्व'-मात्रमुक्तं चेत् ? घटेऽतिव्याप्तिः; अतः शरीरत्वमुक्तम्[१८]; शरीरत्वस्य घटेऽभावान्नातिव्याप्तिः । 'शरीरत्व'-मात्रमुक्तं चेत् ? जलीय-शरीरेऽतिव्याप्तिः; [१९]तत्रापि शरीरत्वस्य सत्त्वाद्[२०] 'गन्धवत्त्वम्' [२१]इत्युक्तम् । एवञ्च

---

९. सैव ७।२।६८ ॥ १०. स० कोषे "विषय-रूपामाह" इति पाठः ॥ ११. स० ४ कोष इतः प्राक् "समवाय-सम्बन्धेन' इत्युक्तौ" इत्यधिकम् ॥ १२. स० कोषेषु "मात्रमुक्तौ" पाठः ॥ १३. "अनित्यं...वच्छेदकम् ।" इति पाठोऽस्मदीय-स०२-५-कोषेषु नास्ति । स० १ कोषेऽपि "ध्वंसेऽभावान्नातिव्याप्तिः" इत्यतः पश्चात्काक-पदं दत्त्वा भिन्न-हस्त-लेखेन पार्श्व-भागे लिखितः ॥ १४. स०१कोषे "अनित्यत्वं च" इति नास्ति ॥ १५. अस्मदीय-स० २-३,५ कोषेषु "मात्र" नास्ति । स० ४ कोषे च "प्रतियोगित्व" इति नास्ति ॥ १६. "मात्रं" न कोषे परमस्मदीये ॥ १७. वाक्यन्नेदन्त्वस्मत्कोषे । स० १-३ कोषेषु तु "प्रागभावे" इति नास्ति । स० ५ कोषे चेद वाक्यं "ध्वंस-प्रतित्वस्य सत्त्वात् ।" इत्यस्ति ॥ १८. स० १ कोषे "शरीरत्वमुक्तम्" इति नास्ति ॥ १९. अस्मदीय-स०१-४कोषेषु "अपि" नास्ति ॥ २०. स० ३कोषे "गन्धवत्त्वात्" इत्यधिकम् ॥

"गन्धवत्त्वे सति शरीरत्वं पार्थिव-शरीरस्य लक्षणम् ।" [22]इति पर्यवसन्नम् ॥

पार्थिवेन्द्रियं लक्ष्यम् । पार्थिवेन्द्रियत्वं लक्ष्यताऽवच्छेदकम् । 'गन्धवत्त्वे सतीन्द्रियत्वं' लक्षणम् । 'गन्धवत्त्व'-मात्रमुक्तं चेत् ? शरीरेऽतिव्याप्तिः; अत 'इन्द्रियत्वम्' उक्तम्; इन्द्रियत्वस्य पार्थिव-शरीरेऽभावान्नातिव्याप्तिः । 'इन्द्रियत्व'-मात्रमुक्तं चेत् ? जलीयेन्द्रियेऽतिव्याप्तिः; तत्रापीन्द्रियत्वस्य[23] सत्त्वात्; अतो 'गन्धवत्त्वम्'[24]इत्युक्तम् । "गन्धवत्त्वे सतीन्द्रियत्वं पार्थिवेन्द्रियस्य लक्षणम् ।" इति सिद्धम्[25] ॥

[26]पार्थिव-विषयो लक्ष्यः[27] । [26]पार्थिव-विषयत्वं[28] लक्ष्यताऽवच्छेदकम् । 'गन्धवत्त्वे सति विषयत्वं' लक्षणम् । 'गन्धवत्त्व'-मात्रमुक्तं चेत् ? पार्थिवेन्द्रियेऽतिव्याप्तिः; तत्रापि गन्धवत्त्वस्य सत्त्वात्; अतो 'विषयत्वम्' उक्तम्[29] । 'विषयत्व'-[30]मात्रमुक्तं चेत् ? जलीय विषयेऽतिव्याप्तिः[31]; अतो '[32]गन्धवत्त्वम्' उक्तम् । 'गन्धवत्त्वे सति विषयत्वं पार्थिव-विषयस्य[33] लक्षणम् ।' इति सिद्धम् ॥

इति [34]पृथिवी-ग्रन्थः ॥ १० ॥

(१.२ जल-द्रव्य-लक्षणम्)

**(१.२) शीत-स्पर्शवत्य आपः । ताः (क) द्विविधाः—(i) नित्या, (ii) अनित्याश्च । (i) नित्याः परमाणु-रूपाः । (ii) अनित्याः कार्य-रूपाः । (ख) पुनस्त्रि-विधाः—(i) शरीर-(ii) इन्द्रिय-(iii) विषय-भेदात् । (i) शरीरं वरुण-लोके । (ii) इन्द्रियं रस-ग्राहकं रसनं जिह्वाऽग्र-वर्ति । (iii) विषयः सरित्समुद्रादिः ॥ ११ ॥**

(बाल-प्रबोधिनी) अपां लक्षणमाह 'शीत-स्पर्शवत्य' इति । 'शीत-स्पर्श-तज्जातीया' इत्यर्थः । तत्र 'शीतश्चासौ स्पर्शश्च=शीत-स्पर्शः, तद्वज्जातीया' इति ज्ञेयम् । तत्र 'स्पर्शवत्य'[1] इत्यनेनाकाशादौ लक्षणातिव्याप्ति-निरासः; 'शीत-' इति पृथिवी-तेजो-वायुषु । 'तज्जातीय-'शब्दस्तु पूर्ववदाद्य-क्षणेऽतिव्याप्ति-निरासाय । विभागादि सर्वं पूर्ववत् ॥

(उपन्यासः) आपो लक्ष्याः । अप्त्वं लक्ष्यताऽवच्छेदकम् । 'समवाय-सम्बन्धेन शीत-स्पर्शवत्त्वं' [2]लक्षणम् । 'समवाय-सम्बन्धा'नुपादाने कालादावपि कालिक-सम्बन्धेन

---

२१. अस्मत्कोषे "इति" नास्ति ॥ २२. स०१ कोषे "इति" नास्ति । स० ४ कोषे "पर्यवसन्नम्" नास्ति ॥ २३. स० ३ : "त्व" नास्ति । २४. अस्मत्कोषे 'इति" नास्ति ॥ २५. अस्मत्कोषे "इति सिद्धम्" नास्ति ॥ २६. अस्मत्कोषे 'पार्थिव" नास्ति ॥ २७. स० ४ : नेदं वाक्यम् ॥ २८. स० ४ : "पार्थिवेन्द्रिप्रयोयत्वं" इत्यपपाठः ॥ २९. स० ५ : "उक्त" नास्ति ॥ ३०. अस्मत्कोषे "मात्रं" नास्ति । स० ५ : इदं वाक्यं "तावन्मात्रोक्तौ" इत्यस्ति ॥ ३१. स० २ कोषे "अतिव्याप्ति-व्याप्तिः" ॥ ३२. स० ५ : "गन्धवत्त्वमुक्तम्" इति नास्ति ॥ ३३. स० ५ : "विषयत्वस्य" ॥ ३४. अस्मत्कोषे "पार्थिव" इत्यस्ति । स० ४ कोषे च "ग्रन्थः" इतिस्थाने "सिद्धम्" इति पाठः ॥ १० ॥

१. अस्मत्कोषे "स्पर्शवत्" इति पाठः ॥ २. स० ४ कोषे "लक्षणम् ।...

शीत-स्पर्शवत्त्वस्य[3] सत्त्वादतिव्याप्तिः; अतस्तदुपादानम् । ""[4]समवाय-सम्बन्धेन शीत-स्पर्शवत्त्वं[5]' जलस्य लक्षणम् ।" इति सिद्धम् ॥

"जलीय-शरीरेन्द्रिय-विषयाणां लक्षणं 'गन्ध'-स्थाने 'शीत-स्पर्शवत्त्वं' निवेश्य पृथिवी-ग्रन्थस्येव ।" इत्यनुसन्धेयम् ॥ इति जल-ग्रन्थः ॥ ११ ॥

(१.३ तेजो-द्रव्य-लक्षणम्)

**(१.३) उष्ण-स्पर्शवत्तेजः । तद् (क) द्वि-विधम्—(i) नित्यम्, (ii) अनित्यं च । (i) नित्यं परमाणु-रूपम्, (ii) अनित्यं कार्य-रूपम् । (ख) पुनस्त्रिविधम्—(i) शरीर-(ii) इन्द्रिय-(iii) विषय-भेदात् । (i) शरीरमादित्य-लोके । (ii) इन्द्रियं रूप-ग्राहकं चक्षुः कृष्ण-ताराऽग्र-वर्ति । (iii) विषयश्चतुर्विधो—(अ) भौम-(आ)दिव्य-(इ) औदर्य-(ई)आकरज-भेदात् । (अ) भौमं वह्न्यादिकम् । (आ) अबिन्धनं दिव्यं विद्युदादि । (इ) भुक्तस्य परिणाम-हेतुरौदर्यम् । (ई) आकरजं सुवर्णादि ॥ १२ ॥**

(बाल-प्रबोधिनी) 'तेजो'-लक्षणमाह 'उष्ण-स्पर्शवत्तेजः ।' इति । 'उष्ण-स्पर्श-वज्जातीयम् ।' इत्यर्थः । समासः पूर्ववत् । तत्र 'स्पर्श-'शब्देनाकाशादौ, 'उष्ण-' शब्देन पृथिवी-जल-वायुषु लक्षणातिव्याप्ति-निरासः । 'तज्जातीय-'शब्देनाद्य-क्षणे पूर्ववदव्याप्ति-निरासः । विभागादि पूर्ववत् ॥

'विषयं' विभज्य दर्शयति 'भौम-' इत्यादि । '(अ) भूमौ भवं=भौमम्; (आ) दिवि भवं=दिव्यम्; (इ) उदरे भवम्=औदर्यम्; (ई) आकरे जायत इति=आकरजम् ।' इत्यर्थः । (आ) आपो=जलानि इन्धनं यस्य, तद्=अबिन्धनम् । 'विद्युदादि' इति 'आदि-'[1] पदेन सूर्य-रश्मयो ग्राह्याः; तेषामप्यपां शोषकत्वात् । 'अनिन्धनम्' इति पाठे तु न क्लिष्ट-कल्पना ॥

स्वर्णादि न वाय्वादि-द्रव्य-षट्कान्तर्भूतम्, रूपित्वात्; नापि जले, नैमित्तिक-द्रवत्वात्; नापि[2] पृथिवी-मात्रम्, अग्नि-संयोगेऽदह्यमानत्वात् । परिशेषात्तैजसत्वम् । पार्थिवद्रवोपरोधात्तु उष्ण-स्पर्शाद्यभानम् । तैजस-द्रवोपरोधाच्च पार्थिव-द्रवस्याग्नि-संयोगे दाहाभावः ॥

(उपन्यासः) तेजो लक्ष्यम् । तेजस्त्वं लक्ष्यताऽवच्छेदकम् । 'समवाय-सम्बन्धेनोष्ण-स्पर्शवत्त्वं[3]' लक्षणम् । 'समवाय-सम्बन्धा'नुपादाने कालेऽतिव्याप्तिः; अतस्तदुपादानम् । "'समवाय-सम्बन्धेनोष्ण-स्पर्शवत्त्वं' तेजसो लक्षणम ।" इति सिद्धम् ॥

[4]तेजसीय-शरीरेन्द्रिय-विषयाणां लक्षणं 'शीत-स्पर्श'-स्थाने 'उष्ण-स्पर्श'[5]

---

सत्त्वादतिव्याप्ति" इत्यन्तो ग्रन्थो नास्ति ॥ ३. अस्मत्कोषे "वत्त्व" इति नास्ति । स० ५ कोषे चेदं "...वत्त्वत्यत्वादति०" इत्यस्ति ॥ ४. अस्मत्कोषे "स्व-" इत्यधिकम् ॥ ५. स०५ कोषे "...स्पर्शत्वं" इति पाठः ॥ ११ ॥

१. अस्मत्कोषे 'आदि' [illegible] ॥ २. अस्मत्कोषे 'अपि' नास्ति । स० कोषे 'पृथ्वी' इति पाठः ॥ ३. स० ४ कोषे इतोऽग्रे "'तेजसो' लक्षणम् ।' इति सिद्धम् ।"

निवेश्य [६]जल-ग्रन्थस्येवेत्यनुसन्धेयम् ।

अत्र विषयश्चतुर्विधः—"(अ) भौमं नाम भूमि-सम्बन्धि[७]; (आ) दिव्यं नाम [८]द्यु-सम्बन्धित्वम्; (इ) औदर्यं नाम उदर-सम्बन्धित्वम्; (ई) आकर-जं[९] नाम सुवर्णादि-[१०]रत्न-विशेषः ।" इति । यथा-यथं[११] लक्षणं बोध्यम्—"उष्ण-स्पर्शवत्त्वे सति भौमत्वम्[१२] ।" इत्यादि ॥ इति तेजो-ग्रन्थः ॥ १२ ॥

(१.४ वायु-लक्षणम्)

**(१.४) रूप-रहित-स्पर्शवान्वायुः । स (क) द्वि-विधो-(i) नित्यो, (ii) ऽनित्यश्च । (i) नित्यः परमाणु-रूपः; (ii) अनित्यः कार्य-रूपः । (ख) पुनस्त्रि-विधः—(i) शरीर-(ii) इन्द्रिय-(iii) विषय-भेदात् । (i) शरीरं वायु-लोके । (ii) इन्द्रियं स्पर्श-ग्राहकं त्वक् सर्व-शरीर-वर्ति । (iii) विषयो (अ) वृक्षादि-कम्पन-हेतुः; (आ) शरीरान्तः-सञ्चारी वायुः प्राणः, स चैकोऽप्यु-पाधि-भेदात्प्राणापानादि-सञ्ज्ञां लभते ॥ १३ ॥**

(बाल-प्रबोधिनी) वायोर्लक्षणमाह 'रूप-रहित' इति । 'रूप-रहित-स्पर्श-वज्जातीय' इत्यर्थः[१] । 'रूप-रहितश्चासौ स्पर्शवांश्च=[२]रूप-रहित-स्पर्शवान्; तज्जातीयः ।' इति समासः । पद-कृत्यं[३], विभागादि च पूर्ववत् ॥

(उपन्यासः) वायुर्लक्ष्यः । वायुत्वं लक्ष्यताऽवच्छेदकम् । 'समवाय-सम्बन्धेना-नुष्णाशीत-स्पर्शवत्त्वं' लक्षणम् । सम्बन्ध-[४]व्यावृत्तिस्तु पूर्ववज्ज्ञेया । 'अनुष्णत्वा'[५]नुपादानेऽशीत-स्पर्शस्य[६] तेजसि सत्त्वादतिव्याप्तिः, अतः 'अनुष्ण-स्पर्शवत्त्वम्' इत्युक्तम्; [७]अनुष्ण-स्पर्शवत्त्वस्य तेजस्यभावान्नातिव्याप्तिः । 'अनुष्ण-स्पर्शवत्त्व[८]'-

---

इति पाठः ॥ ४. अस्मत्कोषे "तैजशीय-" इत्यप-पाठः ॥ ५. स० १-३ कोषेषु "स्पर्शत्वं' इति, स० ४-५ कोषयोः-"स्पर्शवत्त्वं' इति, अस्मत्कोषे च "स्पर्श" इति पाठः ॥ ६. अस्मत्कोषे "जल-ग्रन्थस्य" नास्ति; स० ४ ग्रन्थे वाक्यमिदं "तेजोग्रन्थ-समयनुसन्धेयम्" इत्यस्ति ॥ ७. अयम्पाठोऽस्मत्कोषे; स०४ कोषे "...न्धित्वम्" इति; स०१-३,५ कोषेषु च "भू-सम्बन्धित्वम्" इति । अत्र सर्वत्र "त्वम्" व्यर्थम्, "भौमम्" आदि-पदानां विशेषणत्वात्, 'त्व'-घटित-पदानां च विशेष्यत्वादन्वयायोगात् । इति ध्येयम् ॥ ८. स० ४ कोषे "द्यो-स०" इति पाठः; अस्मदीयादि-शिष्ट-कोषेषु च लब्धः "अप्सम्बन्धि-त्वम्" इति पाठस्तु व्युत्पत्ति-प्रदर्शन-परत्वादस्य टीका-ग्रन्थस्यातथात्वाच्च नास्मा-भिरादृतः । ९. स० ४: "...जत्वम्" ॥ १०. स० २: "रत्नादि०" ॥ ११. स० ५: "-यथत्वं बोध्यम्" ॥ १२. स० १, ३-४ कोषेषु "भौमवत्त्वम्" इति पाठः ॥ १२ ॥

१. अस्मत्कोषे "रूप-रहित० इति...इत्यर्थः ।" इति पुनरुक्तम् ॥ २. स० कोषे "रूपादि-शब्देन प्रकाशाभावः । रहित०" इति पाठः ॥ ३. अस्मत्कोषे इतः पश्चात् "च" इत्यधिकम् ॥ ४. अस्मत्कोषे "व्याप्त-वृ०" इति, स० ४ कोषे च "० व्याप्तिस्तु" इति पाठः ॥ ५. अस्मत्कोषे "'अनुष्ण'-पदानु०" इति पाठः ॥ ६. स० २,४: 'अशीतस्य" । ७. अस्मत्कोषे "अनुष्णाशीत-स्प०" इति ॥ ८. अस्मत्कोषे

मात्रमुक्तौ[९] जलेऽतिव्याप्तिः; अतः 'अशीतत्वम्' उक्तम्; अशीत-स्पर्शवत्त्वस्य[१०] जलेऽभावान्नातिव्याप्तिः; तस्य शीत-स्पर्शवत्त्वात्। 'अनुष्णाशीत-स्पर्शवत्त्व-'मात्रम् उक्तं चेत्? पृथिव्यामतिव्याप्तिः; तत्राप्यनुष्णाशीत-स्पर्शवत्त्वस्य सत्त्वात्[११]; अतः 'अपाकजानुष्णाशीत-स्पर्शवत्त्वं वायोर्लक्षणम्।' इति सिद्धम्॥

तस्य शरीरेन्द्रिय-विषयाणां लक्षणानि[१२] तु 'उष्ण-स्पर्श-'स्थाने 'अनुष्णाशीत-स्पर्श'[१३] निवेश्य तेजो-ग्रन्थस्येवेत्यनुसन्धेयम्॥[१४]

"प्राण-'वायोः[१५] कस्मिन्नन्तर्भावः?" इति चेत्? "विषये।" इति[१६] द्रष्टव्यम्। अपानादि-[१७]भेदस्तु [१८]प्राणनादि क्रियोपाधिको द्रष्टव्यः [१९]पाचक-पाठकादिवत्॥

[२०]अत्र शरीरत्वं न जातिः—पृथिवीत्वा[२१]भाववति शरीरत्वं वायवीय-शरीरे, शरीरत्वाभाववति पृथिवीत्वं[२२] घटे परस्परात्यन्ताभाव-समानाधिकरणयोः पृथिवीत्व-शरीरत्वयोः[२३] एकत्र[२४]=पार्थिव-शरीरे समावेशात्साङ्कर्यम्। किन्तु 'चेष्टाऽऽश्रयत्वम्'॥

एवमिन्द्रियत्वं न जातिः—तत्रापि पृथिवीत्वा[२५]भाववति चक्षुषि[२६] इन्द्रियत्वम्, [२७]इन्द्रियत्वाभाववति पृथिवीत्वं पटे, इति[२८] परस्परात्यन्ताभाव-समानाधिकरणयोः पृथिवीत्वेन्द्रियत्वयोर्घ्राणेन्द्रिये[२९] समावेशात्। किन्तु 'शब्देतरोद्भूत-विशेषगुणानाश्रयत्वे सति ज्ञान कारण-मनः-संयोगाश्रयत्वम्'[३०] इन्द्रिय-सामान्य-लक्षणम्।

अत्र[३१] "विशेषण[३२]-दलानुपादाने ज्ञान-कारण-मनः-संयोगाश्रयत्वस्यात्मनि सत्त्वादतिव्याप्तिः[३३]; अतस्तदुपादानम्। विशेषण-दल-मात्रोक्तौ[३४] [३५]कालादाव-

---

"-स्पर्श-मात्र०" इति॥ ९. स० ४: "० मुक्तम्"॥ १०. अस्मदीय-स०२-४-कोषेषु "स्पर्शस्य" इति, स० १ कोषे च "अशीतस्य" इति॥ ११. स० १ कोषे इतोऽग्रे "अतः अपाकजानुष्णाशीत-स्पर्शवत्त्वस्य सत्त्वात्।" इत्यधिकम्॥ १२. स० ४ कोष एवेदम्॥ १३. स० ५: "-स्पर्शवत्त्वं"॥ १४. स० १ कोष इतोऽग्रे "१" इत्यधिकम्॥ १५. स० कोषेषु "वायुः"॥ १६. स० ५: इतोऽग्रे "विषय-वायाविति" अधिकम्॥ १७. स० ४: "आदि-" नास्ति॥ १८. स० १-२, ४: "प्राणादि-" इति, अस्मदीय-स० ५ कोषयोः "प्राणापानादि-" इति॥ १९. स० ३, ५: "याचक-पा०"। अस्मदीय-कोषे "पाचक-पाठादि०" इति॥ २०. स० ४: "तत्र"॥ २१. स० ३: "त्वा" नास्ति॥ २२. स० १: "पृथिष्ठंठीत्वम्"॥ २३. स० ५: "०त्व-धर्मयोः"॥ २४. स० ५ कोष एवेदम्॥ २५. अस्मत्कोषे "० त्वात्यन्ताभा०"॥ २६. अस्मत्कोषे नास्ति; स० ५ कोषे 'चक्षुरिन्द्रिये' इत्यस्ति॥ २७. अस्मत्कोषे "चाक्षुषेन्द्रि०" इत्यस्ति॥ २८. "इति···करणयोः" अस्मत्कोष एव॥ २९. अस्मत्कोषे "य-समा०" इति, स० ४ कोषे "यत्वे स०" इत्यस्ति॥ ३०. स० ५: "० श्रयत्वेन्द्रियत्वेन्द्रिय-सा०" इति॥ ३१. स० ४: "यत्र"॥ ३२. अस्मत्कोषे "विशेष-द०"॥ ३३. स० १, ३-५ कोषेष्वितोऽग्रे "ज्ञान-कारण-मनः-संयोगाश्रयत्वस्य सत्त्वात्" इति, स० २ कोषे च

तिव्याप्तिः; शब्देतर-विशेष-गुणानां=रूपादीनामनाश्रयत्वात्, अतो विशेष्य-दलम्[३६]।

विशेषण-दले[३७] 'शब्देतर-'इत्यनुपादाने[३८] श्रोत्रेन्द्रियेऽव्याप्तिः; [३९]उद्भूत-विशेष-गुणस्य[४०]शब्दस्यानाश्रयत्वाभावात्[४१];(अतः)[४२]'शब्देतर-'इत्युक्तम्। 'उद्भूत'-[४३]पदानुपादाने चक्षुरादावव्याप्तिः[४४]; शब्देतर[४५]-विशेष-गुणानां[४६]=रूपादीनामनाश्रयत्वाभावात्; अत 'उद्भूत-' इत्युक्तम्। विशेष'[४७]-पदानुपादाने चक्षुरादावसम्भवः स्यात्[४८]; शब्देतरोद्भूत गुणस्य=[४९]संयोगस्यानाश्रयत्वाभावात्[५०]; अतो 'विशेष-गुण' इत्युक्तम्।

विशेष्य-दले 'ज्ञान-कारणत्वा'नुपादाने कालादावतिव्याप्तिः; [५१]अतस्तदुपादानम्; काल-मनः-संयोगस्य ज्ञान-कारणत्वाभावान्नातिव्याप्तिः[५२]। 'मनः-' पदमपि तत्रैवातिव्याप्ति-वारणाय।" इति ध्येयम्[५३]।

विषयत्वं च विषयाकारानुगत-प्रतीति-साक्षिकत्व[५४]-रूप-सम्बन्ध-विशेषः ॥१३॥

(१.५ आकाश-लक्षणम्)

**(१.५) शब्द-गुणकमाकाशम्[१]। तच्च (i) एकम्, (ii) विभु, (iii) नित्यं च ॥ १४ ॥**

**(बाल-प्रबोधिनी) आकाश-लक्षणमाह 'शब्द०' इति। 'शब्दो गुणो यस्य।' इत्यर्थः ॥**

(उपन्यासः) आकाशो लक्ष्यः। आकाशत्वं लक्ष्यताऽवच्छेदकम्। 'समवाय-सम्बन्धेन शब्द-गुणवत्त्वं[२]' लक्षणम्। 'समवाय-सम्बन्धा'नुपादाने कालादावतिव्याप्तिः; अतस्तदुपादानम्।

---

"ज्ञान···श्रयत्वात्।" इत्यधिकम् ॥ ३४. स० ३ : 'विशेष-द०" इति, स० ४ : "विशेषण-द० मात्रमुक्तौ" इत्यस्ति ॥ ३५. स० ४ : "कालादावपि सत्त्वादति०" ॥ ३६. स० ५ : "विशेषण-द०" ॥ ३७. स० ४ : नास्तीदम् ॥ ३८. अस्मत्कोष इतः पश्चाज् "ज्ञानः" इत्यधिकम् ॥ ३९. अस्मत्कोषे "उद्भूत-" ॥ ४०. अस्मत्कोषे "शब्दस्य" नास्ति; स० १ : "शब्दानाश्र०" इति, स० ४ : "शब्दस्याश्र०" इति स० ५ : "शब्दोऽनाश्र०" इत्यस्ति ॥ ४१. अस्मत्कोषे "···श्रयत्वात्" इत्यस्ति ॥ ४२. कोषेष्वनुपलब्धम्; आवश्यकत्वात्तु दत्तम् ॥ ४३. स० ४ : "रूपत्वानु०" ॥ ४४. अस्मदीय-स० ४ कोषयोः " ०दावेतिव्या०" ॥ ४५. स० २, ४ : "शब्देतरे" ॥ ४६. अस्मदीये "च" अधिकम् ॥ ४७. स० ३, ५ कोषयोः "विशेष्य-" ॥ ४८. अस्मत्कोषे '०दावसम्भवात्" ॥ ४९. स० १-२, ५ : "संयोगाद्यना०" इति; स० ३ : "संयोग-संयोगाद्यना०" इति; स० ४ : "संयोगादेरना०" इति ॥ ५०. अस्मत्कोषे "०नाश्रयाभा०" ॥ ५१. अस्मत्कोष एवेदम् ॥ ५२. स० कोषेषु "नाति०" नास्ति ॥ ५३. अस्मत्कोषे "बोध्यम्"; स० ३ : "सन्धेयम्"; स० १-२, ४ : "धेयम्" ॥ ५४. अस्मदीय-स० १-४ कोषेषु "[illegible]" इति पाठः ॥ १३ ॥



१. "शब्द-गुणमा०" इति पाठान्तरम्। सिद्धान्त-चन्द्रोदयः "क्वचिच्छब्द-

श्रोत्रेन्द्रियं लक्ष्यम् । श्रोत्रेन्द्रियत्वं लक्ष्यताऽवच्छेदकम् । 'शब्दाश्रयत्वे सतीन्द्रियत्वं' लक्षणम् । 'इन्द्रियत्व-[3]'मात्रमुक्तं चेत् ? चक्षुरादावतिव्याप्तिः । 'शब्दाश्रयत्व'-मात्रमुक्तं चेत् ? कालादावतिव्याप्तिः; अत उभयोरुपादानम् ।। १४ ।।

(१.६ काल-द्रव्य-लक्षणम्)

**(१.६) अतीतादि-व्यवहार-हेतुः कालः । स च (i) एको, (ii) विभुर्, (iii) नित्यश्च ।। १५ ।।**

(बाल-प्रबोधिनी) काल-लक्षणाद्याह 'अतीतादि०' इति । 'अतीतादि-व्यवहारस्यासाधारणो हेतुः ।' इत्यर्थः । तथा च नेश्वरादौ, बुद्धौ वाऽतिव्याप्तिः ।।

एवं दिग्लक्षणेऽपि 'असाधारण-'शब्दो देयः ।।

(उपन्यासः) कालो लक्ष्यः । कालत्वं लक्ष्यताऽवच्छेदकम् । 'अतीतादि-व्यवहार-हेतुत्वं' लक्षणम् । 'व्यवहार-हेतुत्व'-मात्रमुक्तं चेत्[1] ? दिश्यतिव्याप्तिः; अतः 'अतीतादि'-इत्युक्तम्[2] । अतीतादि-व्यवहार-हेतुत्वस्य दिश्यभावान्नातिव्याप्तिः[3] ।।१५।।

(१.७ दिग्द्रव्य-लक्षणम्)

**(१.७) प्राच्यादि-व्यवहार-हेतुर्दिक् । सा च (i) एका, (ii) विभ्वी, (iii) नित्या च ।। १६ ।।**

(बाल-प्रबोधिनी) दिग्लक्षणाद्याह 'प्राच्यादि०[1]' इति ।।

(उपन्यासः) दिग्लक्ष्या । दिक्त्वं लक्ष्यताऽवच्छेदकम् । 'प्राच्यादि-व्यवहार-हेतुत्वं' लक्षणम् । [2]'प्राच्यादि'-इत्यनुक्तौ व्यवहार-हेतुत्वस्य कालादावपि सत्त्वादतस्त-

---

गुणकमाकाशमित्यपि पाठः ।" इति ।। २. स०५कोषे "०गुणत्वं" ।। ३. स०४ : "त्व" नास्ति ।। १४ ।।

१. स० ४ : "चेत्" नास्ति ।। २. अस्मत्कोषे "उक्तम्" नास्ति ।। ३. अस्मत्कोषे पत्रस्योपर्यधो-भागयोरधस्तनो लेख एतत्प्रकरण-सम्बद्धस्तत्रत्य-पञ्चम-पङ्क्ति-शेषत्वेन समानैः परं किञ्चिदिव सूक्ष्मैरक्षरैरुपलभ्यते—

"'हेतुत्व'-मात्रमुक्तं चेत् ? परमाण्वादावतिव्याप्तिः; तस्यापि द्व्यणुक-कारणत्वात्; अतो 'व्यवहार-हेतुत्वम्' उक्तम् । 'व्यवहार-हेतुत्वम्' उक्तं चेत् ? घटादावतिव्याप्तिः 'अतीतादि-व्यवहार-हेतुत्वम्' उक्तं चेत् ? दिश्यतिव्याप्तिः । अतः 'असाधारण'-पदं देयम् ।

इदं लक्षणमाकाशेऽतिव्याप्तम्—अनेन प्रकारेण व्यवहारस्य शब्दात्मकत्वात्, शब्दस्याकाश-गुणत्वाद्, गुण-गुणिनोश्च समवायादाकाशेऽतिव्याप्तिः; तद्वारणार्थं निमित्ते 'हेतुः" उक्तम् । एतावन्मात्र-लक्षणे कृतेऽपि कण्ठताल्वाद्यभिघातेऽतिव्याप्तिः; तद्वारणार्थं 'विभुत्व-'पदमपि देयम् । विभुत्वस्य पदस्य निवेशे कीदृशं लक्षणं सम्पन्नम् ? तत्रोच्यते—अतीतादि-व्यवहारासाधारण-निमित्त-विभुत्वे सति हेतुत्वं लक्षणम्" ।। १५ ।।

१. अस्मत्कोषे 'प्राची' [illegible] ।। २. स० ५ : "अत्र" अधिकम् । १६ ।।

दुक्तम् ॥ १६ ॥

(१.८ आत्म-द्रव्य-लक्षणम्)

**(१.८) ज्ञानाधिकरणमात्मा । स द्वि-विधः—(i) परमात्मा, (ii) जीवश्च[1] । तत्र (अ) ईश्वरः (आ) सर्वज्ञः (i) परमात्मा (इ) एक एव । (ii) जीवः[1] (अ) प्रति-शरीरं भिन्नो, (आ) विभुर्, (इ) नित्यश्च ॥ १७ ॥**

(बाल-प्रबोधिनी) आत्म-लक्षणमाह 'ज्ञानाधिकरणम्' इति । 'ज्ञानस्याधिकरणम् ।' इत्यर्थः । तद्विभागमाह 'स द्वि-विध[2]' इति । 'विभुर्नित्यश्च' इति परमात्म-जीवयोरुभयोर्विशेषणं ज्ञेयम् ॥

(उपन्यासः) आत्मा लक्ष्यः । आत्मत्वं लक्ष्यताऽवच्छेदकम् । 'समवाय-सम्बन्धेन ज्ञानवत्त्वं'[3] लक्षणम् । 'समवाय-सम्बन्धा'नुपादाने [4]विषयता-सम्बन्धेन ज्ञानवत्त्वस्य[5] घटे सत्त्वादतिव्याप्तिः; अतस्तदुपादानम् । (i) ईश्वरो लक्ष्यः । ईश्वरत्वं लक्ष्यताऽवच्छेदकम् । 'सर्वज्ञत्वे सति परमत्वं' लक्षणम् । 'परमत्वा'नुपादाने [6]कस्मिंश्चिद् योगि[7]-विशेषेऽतिव्याप्तिः: अतस्तदुक्तम्[8] । 'सर्वज्ञत्वा'नुपादाने साङ्ख्याभिमत-प्राधान्येऽतिव्याप्तिः; तस्यापि स्व-कार्यापेक्षया परमत्वात्; अतः 'सर्वज्ञत्वम्' [9]इति । (ii) जीवः प्रति-शरीरं भिन्नत्वेन[10], शरीराणामानन्त्याज्[11] जीवोऽप्यनन्तः[12] ॥ १७ ॥

(१.९ मनो-द्रव्य-लक्षणम्)

**(१.९) सुखाद्युपलब्धि-साधनमिन्द्रियं मनः । तच्च (i) प्रत्यात्म-नियतत्वादनन्तम्, (ii) परमाणु-रूपम्, (iii) नित्यं च ॥ १८ ॥**

(बाल-प्रबोधिनी) मनसो लक्षणमाह 'सुखाद्युपलब्धि-साधनमिन्द्रियम्[1]' इति । 'सुखादि'-इत्यनुक्तौ[2] बाह्येन्द्रियेषु लक्षणातिव्याप्तिः । 'इन्द्रियम्' इत्यनुक्तौ[2] आत्मन्यतिव्याप्तिः । 'प्रत्यात्म-नियतत्वात्'='नियमेन वर्तमानत्वात्[3]' इत्यर्थः ॥

(उपन्यासः) मनो लक्ष्यम् । मनस्त्वं लक्ष्यताऽवच्छेदकम् । 'सुखाद्युपलब्धि-साधनत्वे सतीन्द्रियत्वं' मनसो लक्षणम् । 'सुखाद्युपलब्धि-साधनत्व[4]'-मात्रमुक्तं चेत् ? स्रक्चन्दनादावतिव्याप्तिः, [5]अत 'इन्द्रियत्वम्' उक्तम् । 'इन्द्रियत्व'-मात्रमुक्तं चेत् ?

---

१. कतिपय-कोषेषु "जीवात्मा" । स च दीपिका-न्यायबोधिनी-बालप्रबोधिनी-उपन्यास-निरुक्तिषु "जीव" इति प्रतीक-दानेन, व्याख्यायां च "जीवात्म-"स्थाने "जीव-"ग्रहणेन खण्ड्यते ॥ २. अस्मत्कोषे 'द्विधा" ॥ ३. स० ५ : "ज्ञानत्वम्" ४. स० ५ : "विषयिता" ॥ ५. स० १-४ : "ज्ञानस्य" ॥ ६. सर्वत्र "कश्चिद्" इत्यस्ति ॥ ७. स० ५ : "योग-" ॥ ८. अस्मत्कोषे "तदुपादानम्"; स० ४ : "तदुपादानमुक्तम्" ॥ ९. अस्मत्कोष एवेदं वाक्यम् ॥ १०. स० ५ : "भिन्नत्वे" ॥ ११. अस्मत्कोषे "०राणामनन्तत्वा" ॥ १२. स० ५ : "जीवाप्यनन्ताः" ॥ १७ ॥

१. स० कोषे "इन्द्रियं" नास्ति ॥ २. अस्मत्कोषे "इत्युक्तौ" इत्यस्ति ॥ ३. अस्मत्कोषे "वर्तमानात्" इत्यस्ति ॥ ४. स० ३ कोषे "०साधन-मा०" इति, अस्मत्कोषे च "०साधनत्वमन-मा०" इति पाठः ॥ ५. इदमादिर्ग्रन्थः स० कोषे नास्ति ॥ ६. स०

चक्षुरादावतिव्याप्तिः; अतः 'सुखाद्युपलब्धिसाधनत्वम्[६]' उक्तम्। चक्षुरादौ रूपाद्युपलब्धि-साधनत्वेऽपि[७] सुखाद्युपलब्धि-साधनत्वाभावान्नाव्याप्तिः ॥ १८ ॥

(अथ २. गुण भेद-लक्षण-प्रकरणे १ रूप-लक्षणम्)

**(२१) [१]चक्षुर्मात्र-ग्राह्यो गुणो रूपम्। तच्च—(i) शुक्ल-(ii) नील-(iii) पीत-(iv) रक्त-(v) हरित-(iv) कपिश-(vii) चित्र-भेदात्सप्त-विधम्। (क) पृथिवी-(ख) जल-(ग) तेजो-वृत्ति। तत्र (क) पृथिव्यां सप्त-विधम्; (ख) अभास्वर-शुक्लं जले; (ग) भास्वर-शुक्लं तेजसि ॥ १६ ॥**

(बाल-प्रबोधिनी) गुणानाह 'अथ'[१] इत्यादि। तत्र रूप-लक्षणमाह 'चक्षुः' इति। 'ग्राह्य'-मात्रोक्तौ सर्वत्रातिव्याप्तिः। 'ग्राह्य-गुण' इत्युक्तौ रसादौ। 'चक्षुर्ग्राह्यो गुण' इत्युक्तौ सङ्ख्याऽऽदौ। 'चक्षुर्मात्र-ग्राह्य[२]' इत्युक्तौ रूपत्व-जातावतिव्याप्तिः। इति 'चक्षुर्मात्र-ग्राह्यो गुण' इत्युक्तम्। आलोक-भित्त्यादि-संयोगेऽतिव्याप्ति-वारणाय 'अद्विष्ट-गुण' इत्यपि वाच्यम्[३]॥ रूपं विभजति 'तच्च' इत्यादि ॥

(उपन्यासः) रूपं लक्ष्यम्। रूपत्वं लक्ष्यताऽवच्छेदकम्। 'चक्षुर्मात्र-ग्राह्यत्वे सति विशेष-गुणत्वं[४]' रूपस्य लक्षणम्। 'चाक्षुर्मात्र-ग्राह्यत्वं' नाम=चक्षुरितरेन्द्रिया-ग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्[५]। चक्षुर्ग्राह्यत्वे सति गुणत्वस्य[६] सयोगादावपि सत्त्वादतिव्याप्तिः; अतः 'चक्षुरितरेन्द्रियाग्राह्यत्वम्' उक्तम्; संयोगादीनां चक्षुरितर-त्वगिन्द्रिय-ग्राह्यत्वान्नातिव्याप्तिः[७]। 'चक्षुर्ग्राह्यत्वा'नुपादाने गुरुत्वादावतिव्याप्तिः; अतः 'चक्षुर्ग्राह्यत्वम्' उक्तम्; तत्र चक्षुर्ग्राह्यत्वाभावान्नातिव्याप्तिः। 'गुणत्वा[८]'नुपादाने रूपत्वेऽतिव्याप्तिः; तत्रापि चक्षुरितरेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वस्य सत्त्वात्; अतस्तदुक्तम्; रूपत्वे गुणत्वाभावान्नातिव्याप्तिः। 'विशेष-'पदानुपादाने प्रभा भित्ति-संयोग-विशेषेऽतिव्याप्तिः[६]; तत्रापि चक्षुरितरेन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वे[१०] सति गुणत्वस्य सत्त्वात्; अतस्तदुक्तम्; तस्य विशेष-गुणत्वाभावान्नातिव्याप्तिः ॥ १६ ॥

(२.२. रस-गुण-लक्षण-भेदादि-कथनम्)

**(२.२) रसन-ग्राह्यो गुणो रसः। स च (i-ii) मधुराम्ल-(iii) लवण-**

---

२-३ कोषयोरस्मत्कोषे च "साधनम्" इति पाठः ॥ ७. अस्मत्कोषे "साधने" इत्यस्ति। स० ४ कोषे "अपि" इत्यस्य स्थाने "सति" इत्यस्ति ॥ १८ ॥

१. बाल-प्रबोधिन्याम् "अथ" इति प्रतीकं धृतं, तदीयाधार-ग्रन्थेऽस्यात्र मौलिकत्वं सूचयति। २. अस्मत्कोषे 'ग्राह्य" इति नास्ति ॥ ३. स० कोष एवेदं वाक्यम् ॥ ४. स० ५ कोषे "गुणवत्त्वम्" ॥ ५. अस्मत्कोषे "चक्षुर्मात्र-ग्रा०" इति; स० ४ कोषे त्विदं पदन्नास्त्येव ॥ ६. अस्मत्कोषे "गुणस्य" ॥ ७. अस्मत्कोषे "ग्राह्यत्वाभावान्ना०" ॥ ८. अस्मत्कोषे इदं पदकृत्यं नास्ति; अस्य स्थानेऽत्र "'विशेष'-पदानु०" इत्यस्ति। अग्रिमा टिप्पणिर्द्रष्टव्या ॥ ६. अस्मत्कोषे इदं पद-कृत्यं 'रूपत्वे'ऽतिव्याप्ति-प्रसङ्गेन दत्तम्; गता टिप्पणिर्द्रष्टव्या; तस्मादत्र "प्रभा० व्याप्तिः" इति स्थाने "रूपत्वेऽति०" इत्यस्ति ॥ १०. अस्मत्कोषे "चक्षु० सति" नास्ति ॥ १६ ॥

**(iv)कटु-(v)कषाय-(vi)तिक्त-भेदात्षड्विधः। (क) पृथिवी-(ख) जलवृत्तिः। तत्र (क) पृथिव्यां षड्विधो; (ख) जले मधुर एव ॥ २० ॥**

(बाल-प्रबोधिनी) रस-लक्षणमाह 'रसन०' इति। पद-कृत्य[1]-विभागादि पूर्ववत् ॥

(उपन्यासः) रसो लक्ष्यः। रसत्वं लक्ष्यताऽवच्छेदकम्। 'रसन-[2]ग्राह्यत्वे'-सति गुणत्वं' लक्षणम्। 'रसन[2]-ग्राह्यत्व'-मात्रमुक्तौ रसत्वेऽतिव्याप्तिः[3]; अतो 'गुणत्वम्' इत्युक्तम्; रसत्वे[4] गुणत्वाभावान्नातिव्याप्तिः। 'गुणत्व'-मात्रमुक्तौ[5] रूपेऽतिव्याप्तिः; अतो 'रसन[2]-ग्राह्यत्वम्' [6]उक्तम्; रूपे रसन[2]-ग्राह्यत्वाभावान्नाति-व्याप्तिः। ॥ २० ॥

(२.३ गन्ध गुण-लक्षण-भेदादि-कथनम्)

**(२.३) घ्राण-ग्राह्यो गुणो गन्धः। स च द्वि-विधः—(i) सुरभिः, (ii) असुरभिश्च। पृथिवी-मात्र-वृत्तिः ॥ २१ ॥**

(बाल-प्रबोधिनी) गन्ध-लक्षणाद्याह 'घ्राण:' इति। पूर्ववत् ॥

(उपन्यासः) गन्धो लक्ष्यः। गन्धत्वं लक्ष्यताऽवच्छेदकम्। 'घ्राण-ग्राह्यत्वे सति[1] गुणत्वं' लक्षणम्। 'घ्राण-ग्राह्यत्व'-[2]मात्रमुक्तं चेत्? गन्धत्वेऽतिव्याप्तिः; अतो 'गुणत्वम्[3]' उक्तम्; गन्धत्वे गुणत्वाभावान्नातिव्याप्तिः। 'गुणत्व'मात्रमुक्तं चेत्? रूपादावतिव्याप्तिः; अतो[4] 'घ्राण-ग्राह्यत्वम्' उक्तम् ॥ २१ ॥

(२.४ स्पर्श-गुण लक्षण-भेदादि-कथनम्)

**(२.४) त्वगिन्द्रिय-मात्र-ग्राह्यो गुणः स्पर्शः। स च त्रिविधः—(i) शीत-(ii) उष्ण-(iii) अनुष्णाशीत-भेदात्। पृथिव्यप्तेजो-वायु-वृत्तिः। तत्र (i) शीतो जले; (ii) उष्णस्तेजसि; (iii) अनुष्णाशीतः पृथिवी- वाय्वोः ॥ २२ ॥**

(बाल-प्रबोधिनी) स्पर्श-लक्षणमाह 'त्वग्०' इति। सङ्ख्यादावतिव्याप्ति-परिहाराय '-मात्र-' इति। अन्यत्समानम्[1]। न शीतो, न चोष्णो=ऽनुष्णाशीतः ॥

(उपन्यासः) स्पर्शो लक्ष्यः। स्पर्शत्वं लक्ष्यताऽवच्छेदकम्। 'त्वगिन्द्रिय-मात्र-ग्राह्यत्वे सति[2] गुणत्वं' स्पर्शस्य[2] लक्षणम्। 'त्वगिन्द्रिय-मात्र-ग्राह्यत्वम्' [2]उक्तं चेत्? स्पर्शत्वेऽतिव्याप्तिः; अतो 'गुणत्वम्' उक्तम्; [3]तत्र गुणत्वाभावान्नातिव्याप्तिः। 'गुणत्व-'मात्रमुक्तं चेत्? गन्धादावतिव्याप्तिः; अतः 'त्वगिन्द्रिय-मात्र-ग्राह्यत्वम्' उक्तम्; तत्र त्वगिन्द्रिय-[4]ग्राह्यत्वाभावान्नातिव्याप्तिः। अत्र 'मात्र-'पदानुपादाने

---

१. स० कोषे "पद-कृत्यं वि०" इत्यस्ति ॥ २. स० ५ कोष एव पाठोऽयम्। अन्यत्र "रसना-" ॥ ३. स० १ कोषे 'रसत्वेऽव्याप्तिः" इत्यस्ति ॥ ४. अस्मत्कोषे इतोऽग्रे "सत्त्वे" इत्यधिकम् ॥ ५. स० ५ कोषे "मात्रोक्तौ" ॥ ६. अस्मत्कोष इतः पश्चात् "इत्युक्तम्। रूपे 'रसना-ग्राह्यत्वम्' इत्युक्तम्।" इति वाक्य-शेषः ॥ २० ॥

१. स० ३ : नास्तीदम् ॥ २. "मात्र" इत्यस्मत्कोषे नास्ति ॥ ३. अस्मत्कोषे "त्व" नास्ति ॥ ४. अस्मत्कोषे "अतो" नास्ति ॥ २१ ॥



१. अस्मत्कोषे "समाने" ॥ २. अस्मत्कोषे नेमानि पदानि। स० ४ कोषे

सङ्ख्यादावतिव्याप्तिः; त्वगिन्द्रिय-ग्राह्यत्वे सति [५]गुणत्वस्य सत्त्वात्; अतो 'मात्र-' पदम्; तत्र [६]त्वगितरेन्द्रिय-चक्षुर्ग्राह्यत्वान्नातिव्याप्तिः ॥ २२ ॥

(२.१-४ रूप-रस-गन्ध-स्पर्श-गुणानामधिष्ठान-विशेष-कथनम्)

**(२.१-४) रूपादि-चतुष्टयं (क) पृथिव्यां (i) पाकजम् (अ) अनित्यं च; (ख) अन्यत्र (ii) अपाकजं (अ) नित्यम्, (आ) अनित्यं च —(अ) नित्य-गतं=नित्यम्; (आ) अनित्य-गतम्=अनित्यम् ॥ २३ ॥**

(बाल-प्रबोधिनी) रूपादेरवान्तर-भेदमाह 'रूपादि०' इति । (i) अग्नि-संयोगजं =पाकजम् । (अ) नित्य-गतं=परमाणु-गतम्; (आ) अनित्य-गतं=द्व्यणुकादि-कार्य-गतम् ॥

(उपन्यासः) रूपादि-चतुष्टयं द्वि-विधम्—(i) 'पाकजम्, (ii) अपाकजं च' इति । (i) पाकजं रूपादि-चतुष्टयं (क) पृथिव्यामेव; (ii) अपाकजं (ख) जलादौ । (ii) तच्च (अ) नित्यम्, (आ) अनित्यं च—(अ) परमाण्वादि-गतं=नित्यम्, (आ) द्व्यणुकादि-गतम्=अनित्यम् । (i) पाकजं तु[१] सर्वत्रानित्यमेव ॥

(२.१.१) रूप-विशेषस्य[२] लक्षणं 'चक्षुर्ग्राह्यत्वे सति शुक्लत्वादिकं[३]' बोध्यम् । (२.२.१) रस-विशेषस्य लक्षणं 'रसन[४]-ग्राह्यत्वे सति मधुरत्वादिकं' बोध्यम् । (२.३.१) गन्ध-विशेषस्य[५] लक्षणं 'घ्राण-ग्राह्यत्वे सति सुरभित्वादिकं' बोध्यम् । (२.४.१) स्पर्श-विशेषस्य लक्षणं 'त्वगिन्द्रिय-ग्राह्यत्वे सति शीतत्वादिकं बोध्यम्' । 'त्वगिन्द्रिय-मात्र-ग्राह्यत्वम्' उक्तौ शीतत्वेऽतिव्याप्तिः; अतः 'शीतत्वम्' उक्तम्; तत्र शीतत्वाभावान्नातिव्याप्तिः ।' शीतत्व-'मात्रमुक्तौ लक्षण-लक्ष्यताऽवच्छेदकयोरैक्य-प्रसङ्गात् 'त्वगिन्द्रिय[६]-ग्राह्यत्वम्' उक्तम् । एवं पद-कृत्यं रूप-विशेषादावपि बोध्यम् ॥ २३ ॥

(२.५ सङ्ख्या-गुण-लक्षणम्)

**(२.५) एकत्वादि-व्यवहार-हेतुः[१] सङ्ख्या नव-द्रव्य-वृत्तिरेकत्वादि-परार्ध-पर्यन्ता । (क) एकत्वं (i) नित्यम्, (ii) अनित्यं च—(i) नित्य-गतं=**

---

"स्पर्शलक्ष०" इत्यस्ति ॥ ३. अस्मत्कोषे "अत्र" ॥ ४. अस्मत्कोषे 'ग्राह्य" नास्ति ॥ ५. अस्मत्कोषे "गुणस्य" ॥ ६. अस्मत्कोषे "त्वगिन्द्रियेन्द्रिय०" इत्यस्ति । स० ३ : "इतर" नास्ति । स०५: "त्वगिन्द्रिय-भिन्नेन्द्रिय-चक्षुरिन्द्रिय-ग्रा०" इत्यस्ति ॥ २२ ॥

१. स० ५ : "तत्" ॥ २. स० ४ : "रूप-विशेष-ल०" ॥ ३. अस्मदीय-स० ५ कोषयोः "शुक्लादिकं" ॥ ४. स०५त इतरेषु "रसना" ॥ ५. स० ५ : "गन्ध-विशेष-ल०" ॥ ६. स० १ कोषे "त्वगिन्द्रियत्व-ग्रा०" ॥ २३ ॥

१. बाल-प्रबोधिन्यनुसारेणात्र "व्यवहारासाधारण-हेतुः" इति पाठः । श्रीमदथल्ये-बोडाभ्यां प्रयुक्तेषु (तदीयेषु ए, बी, सी इत्येतेषु) संस्करणेषु चापि तथैव पाठः । "सङ्ख्यादि-लक्षणेषु सर्वत्र दिक्कालादावतिव्याप्ति-वारणाय 'असाधारण-' इति पदं देयम् ।" इति संयोग-स्थ-दीपिकातः "अत्र 'असाधारण'-पदं न मौलिकम् ।" इति प्रतीयते । "कालादि-वारणाय 'असाधारण-' इत्यपि देयम् ।" इति पद-कृत्य-टीकाऽप्य-

नित्यम्; (ii) अनित्य-गतम्=अनित्यम्। (ख) द्वित्वादिकं तु सर्वत्रामित्यमेव ॥ २४ ॥

(बाल-प्रबोधिनी) सङ्ख्या-लक्षणमाह 'एकत्वादि-' इति। ईश्वरादौ, बुद्धौ, वाक्चक्षुरादौ चातिव्याप्ति-वारणाय 'असाधारण-' इति ॥

(उपन्यासः) सङ्ख्या लक्ष्या। सङ्ख्यात्वं लक्ष्यताऽवच्छेदकम्। 'एकत्वादि-व्यवहार-हेतुत्वं' [2]लक्षणम्। 'व्यवहार-हेतुत्वं-' मात्रमुक्तौ घटादावतिव्याप्तिः; तत्रापि 'घट' इति व्यवहार-हेतुत्वस्य सत्त्वात्; अत 'एकत्वादि-' इत्युक्तम्। 'एकत्वादि-' मात्रमुक्तं चेत्? लक्षण-लक्ष्यताऽवच्छेदकयोरैक्य-प्रसङ्गः[3]; अतो 'व्यवहार-हेतुत्वम्' उक्तम् ॥ २४ ॥

(२.६. परिमाण-गुण-लक्षण-भेद-कथनम्)

(२६) मान-व्यवहार[1]-कारणं परिमाणं नव-द्रव्य-वृत्ति। तच्चतुर्विधम्—'(i) अणु, (ii) महद्, (iii) दीर्घं, (iv) ह्रस्वं च।' इति ॥ २५ ॥

(बाल-प्रबोधिनी) परिमाण-लक्षणमाह 'मान०' इति। पूर्ववत् ॥

(उपन्यासः) परिमाणं लक्ष्यम्। परिमाणत्वं लक्ष्यताऽवच्छेदकम्। 'मान-व्यवहारासाधारण-कारणत्वं' लक्षणम्। व्यवहारासाधारण-कारणत्वस्य[2] घटादावपि सत्त्वादतिव्याप्तिः; [3]अतो 'मान-व्यवहार-'इत्युक्तम्। मान-व्यवहार-कारणत्वस्य[4] कालादावपि सत्त्वादतिव्याप्तिः; अतः 'असाधारण-'इत्युक्तम्; असाधारणत्वं च कार्यत्वावच्छिन्न[5]-कार्य-विशेष-निष्ठ[6]-धर्मावच्छिन्न-कार्यता-निरूपित-कारणता-शालित्वम्; [7]तस्य [8]कालादावभावान्नातिव्याप्तिः; तस्य कार्य-सामान्य-कारणतात्वात्[9] ॥

अणु-व्यवहारासाधारण-कारणत्वम्[10] अण्वादि-परिमाण-विशेषाणां लक्षणं बोध्यम् ॥ २५ ॥

---

त्रार्थेऽनुकूला ॥ २. स० ४ कोषे "लक्षणं" नास्ति ॥ ३. अस्मत्कोषे "०क्य-प्रसङ्गात्" इत्यस्ति ॥ २४ ॥

१. गुरुप्रसाद-संस्करणेऽत्र "असाधारण-" इत्यप्यस्ति। स च पाठः 'संयोग-दीपिकायाः "सङ्ख्याऽऽदि-लक्षणेषु सर्वत्र दिक्कालादावतिव्याप्ति-वारणाय 'असाधारण-' इति पदं देयम्।" इत्यन्नम्भट्ट-वचन-विरोधान्नृसिंह-प्रकाशिकायां धृतोद्धृत-व्याख्यात-पाठ-विरोधाच्चोपेक्ष्यः ॥ दीपिकाया इदं वचनमनुरुध्यैव टीका-कृद्भिरत्र 'असाधारण-' इति पदं निवेश्यैव व्याख्यातम्। इमानि व्याख्यानान्येव च कदाचिद् गुरुप्रसाद-संस्करणेऽस्य मूलेऽपि सन्निवेशस्य हेतुः ॥ २. स०२कोषे "कारणस्य"। इति अस्मत्कोषे इतोऽग्रे "पटा०" इत्यस्ति ॥ ३. अस्मत्कोषे "अतो ०दतिव्याप्तिः" इति यावन्नास्ति ॥ ४. स० ४ : "व्यवहारासाधारणत्वस्य" इति ॥ ५. स० १-२, ४-५ कोषेषु "त्वानवच्छिन्न-" इति ॥ ६. स० ३ कोषे "निष्ठं" पाठः ॥ ७. स० ५ कोषे नास्तीदम् ॥ ८. स० ४ कोषे "कालादावपि भा०" इति पाठः ॥ ९. स०३ कोषे "कारणत्वात्" इति ॥ १०. अस्मत्कोषे "असाधारणमाना०" इति, स० ३ कोषे

(२.७ पृथक्त्व-गुण-लक्षणम्)

**(२.७) पृथग्व्यवहार-कारणं पृथक्त्वं सर्व-द्रव्य-वृत्ति ॥ २६ ॥**

(बाल-प्रबोधिनी) पृथक्त्व-लक्षणमाह 'पृथक्०' इति । पद-कृत्यं पूर्ववत् ॥

(उपन्यासः) पृथक्त्वं[1] लक्ष्यम् । पृथक्त्वत्वं[1] लक्ष्यताऽवच्छेदकम् । 'पृथग्व्यवहारासाधारण-कारणत्वं' लक्षणम् । व्यवहारासाधारण-कारणत्वस्य[1] घटादावपि सत्त्वात् 'पृथक्'-इत्युक्तम् । पृथग्व्यवहार-कारणत्वस्य[1] कालादावपि सत्त्वादतिव्याप्तिः; अतः 'असाधारण' इत्युक्तम्[2]; तत्रासाधारण-कारणत्वाभावान्नातिव्याप्तिः ॥ २६ ॥

(२.८ संयोग-गुण-लक्षणम्)

**(२.८) संयुक्त-व्यवहार-हेतुः संयोगः सर्व-द्रव्य-वृत्तिः ॥ २७ ॥**

(बाल-प्रबोधिनी) संयोग-लक्षणमाह 'संयुक्त०' इति । पूर्ववत् ॥

(उपन्यासः) संयोगो लक्ष्यः । संयोगत्व लक्ष्यताऽवच्छेदकम् । [1]'संयुक्त-व्यवहार-हेतुत्वं' लक्षणम् । ''व्यवहार-हेतुत्वम्' इत्युक्तौ घटादावतिव्याप्तिः; अतः 'संयुक्त-' इत्युक्तम् ॥ २७ ॥

(२.९ विभाग-गुण-लक्षणम्)

**(२.९) संयोग-नाशको गुणो विभागः सर्व-द्रव्य-वृत्तिः ॥ २८ ॥**

(बाल-प्रबोधिनी) विभाग-लक्षणमाह[1] 'संयोग०' इति । 'संयोग-नाशक-' मात्रोक्तौ तन्नाशके कर-शस्त्रादि-द्रव्ये[2] अतिव्याप्तिः; तन्निरासाय 'गुण' इति । 'गुण-'मात्रोक्तौ 'सर्व-गुणेषु नाशक-गुण' इत्युक्तौ ईश्वरेच्छाऽऽदौ अतिव्याप्ति-निरासाय 'संयोग-नाशको गुण' इत्युक्तम् । तत्र 'संयोग-मात्र-नाशक' इति ज्ञेयम्, अन्यथा ईश्वरेच्छाऽऽदेः संयोग-नाशेऽपि कारणत्वान्नातिव्याप्ति-परिहारः ॥

(उपन्यासः) विभागो लक्ष्यः । विभागत्वं लक्ष्यताऽवच्छेदकम् । 'संयोग-नाशकत्वे सति गुणत्वं लक्षणम् । 'संयोग-नाशकत्वम्' उक्तं चेत् ? कालादावतिव्याप्तिः; अतो 'गुणत्वम्'[3] उक्तम् । 'गुणत्व-'मात्रमुक्तं चेत् ? रूपादावतिव्याप्तिः; अतः 'संयोग-नाशकत्वम्' उक्तम् ॥ २८ ॥

---

''अ० कारणत्वं लक्षणम् । अत एवाण्वादि०'' इति पाठः ॥ २५ ॥

१. अस्मत्कोषे ''पृथक्'', ''पृथक्त्वं'', ''व्यवहारासाधारणत्वस्य'', ''पृथग्-व्यवहार'' इति यथा-यथमस्ति ॥ २. स०२कोषे ''उक्तम्; तत्रा० व्याप्तिः।'' नास्ति । स०४ कोषे ''तत्र'' इति पुनरुक्तम् । अस्मत्कोषे ''कारण'' इति नास्ति ॥ २६ ॥

१. स०३कोषे ''संयोग-'' इति ॥ २७ ॥

१. इतोऽग्रेऽस्मत्कोषे ''चूर्णादिति । गुण-मात्रेऽतिव्याप्ति-भयाच्चूर्णादि-पिण्डी-भाव-हेतुरित्युक्तम् । जलेऽतिव्याप्ति-भयाद् 'गुण' इत्युक्तम् । तत्र 'संयोग-नाशक' इति ज्ञेयम् । अन्यथा ईश्वरेच्छाऽऽदेः ।'' इति पाठोऽपि लेखक-प्रमादादुपलभ्यते । अत्र ''चूर्णादि० इत्युक्तम् ।'' इत्यंशः 'स्नेह-'गुण-व्याख्यांशः; ''तत्र०'' इति चात्रत्य एव 'विभाग'-लक्षण-पद-कृत्यांश इति बोध्यम् ॥ २. स०[illegible]कोषे ''०रत्रादिन्द्रिये''

(२.१०पर-११अपर-गुण-लक्षण-भेदाधिष्ठानानि)

**(२.१०-११) परापर-व्यवहारासाधारण-कारणे परत्वापरत्वे। पृथिव्यादि-चतुष्टय-मनो-वृत्तिनी[1]। ते द्वि-विधे (i) दिक्कृते, (ii) काल-कृते च —(२.१०.i) दूरस्थे दिक्कृतं परत्वम्; (२.११.i) समीपस्थे दिक्कृतमपरत्वम्; (२.१०.ii) ज्येष्ठे काल-कृतं परत्वम्; (२.११.ii) कनिष्ठे कालकृतमपरत्वम् ॥ २९ ॥**

(बाल-प्रबोधिनी) परत्वापरत्वयोर्लक्षणमाह 'परापर०' इति। तत्र (२.१०) 'पर-व्यवहारा-साधारण[2]-कारणं=परत्वम्'; (२.११) 'अपर-व्यवहारासाधारण-[2] कारणम्=अपरत्वम्।' इति विभागः। 'असाधारण-'शब्देनातिव्याप्ति-वारणमपि पूर्ववत् ॥

(उपन्यासः) परत्वापरत्वे[3] लक्ष्ये। परत्वापरत्वत्वे[4] लक्ष्यताऽवच्छेदके। 'परापर-व्यवहारासाधारण-कारणत्वे[5]' लक्षणे। 'असाधारण-'पदं कालादि-वारणाय[6]। घटादि-वारणाय 'परापर-' इति ॥

अत्र गुण-द्वय-सहोच्चारणं परस्पर-[7]सापेक्षत्वादिति ज्ञेयम्। 'ज्येष्ठ-' इत्याद्युदाहरणं बोध्यम् ॥ २९ ॥

(२.१२ गुरुत्व-लक्षणम्)

**(२.१२) आद्य-पतनासमवायि-कारणं गुरुत्वं पृथिवी-जल-वृत्ति ॥ ३० ॥**

(बाल-प्रबोधिनी) गुरुत्व-लक्षणमाह 'आद्य०' इति। कारण-मात्रेऽतिव्याप्ति-वारणाय 'पतन' इति। पतमाने द्रव्येऽतिव्याप्ति-वारणाय 'असमवायि-' इति। वेगेऽतिव्याप्ति-निरासाय 'आद्य-' इति ॥

(उपन्यासः) गुरुत्वं लक्ष्यम्। गुरुत्वत्वं[1] लक्ष्यताऽवच्छेदकम् 'आद्यपतनासमवायि-कारणं' लक्षणम्। द्वितीयादि-पतनासमवायि-कारणे वेगादावतिव्याप्तिवारणाय 'आद्य-पतन-'[2] इत्युक्तम्। 'आद्य-पतन-कारणत्वम्'[3] इत्युक्तौ समवायि-[4]कारणेऽति-

---

इत्यस्ति ॥ ३. अस्मत्कोषे "अतो० मुक्तम्" नास्ति; स० ५ कोषे "अतो० त्वमित्युक्तम्" इत्यस्ति ॥ २८ ॥

१. कतिपय कोषेष्वेवेदम्। इतर-गुणानामाश्रय-कथनमन्नम्भट्टेन विहितमित्यत्रापि स्यादिवेदम्। अति-साधारणतया बहुष्वितर-स्थलेष्विव नेदं टीका-कृद्भिर्व्याख्यातम्। इति प्रतीयते ॥ २. अस्मत्कोषे "असाधारण-" नास्ति ॥ ३. स० ५ कोषे "लक्ष्ये० त्वत्वे" नास्ति ॥ ४. अस्मत्कोषे "परत्वापरत्वे" इत्यस्ति ॥ ५. अस्मत्कोषे "०साधारणे" इति, स० १-४ कोषेषु च "०साधारण-कारणे" इति पाठः ॥ ६. स०५ कोषेषु "कालादि-दावतिव्याप्ति-वारणाय" इति पाठः ॥ ७. स० ५ कोषे "परस्परं सा०" इति, स० ३ कोषे "०सापेक्षादिति" पाठः ॥ २९ ॥

१. अस्मत्कोषे "गुरुत्वं" पाठः। २. अस्मत्कोषे "आद्येत्युक्तम्" इति ॥ ३. स०५कोषे "इति" नास्ति ॥ ४. अस्मत्कोषे "कारणत्वं लक्षणम्। द्वितीयादि-

व्याप्तिः; अतः 'असमवायि' इत्युक्तम् ।। ३० ।।

(२.१३ द्रवत्व-लक्षणम्)

**(२.१३) [1]स्यन्दनासमवायि-कारणं द्रवत्वं पृथिव्यप्तेजो-वृत्ति । तद् द्वि-विधं—(i) सांसिद्धिकं, (ii) नैमित्तिकं च । (i) सांसिद्धिकं जले, (ii) नैमित्तिकं पृथिवी-तेजसोः—पृथिव्यां घृतादावग्निसंयोग-जन्यं द्रवत्वम्; तेजसि सुवर्णादौ ।। ३१ ।।**

(बाल-प्रबोधिनी) द्रवत्व-लक्षणमाह 'स्यन्दन०' इति । पूर्ववत् ।।

(उपन्यासः) द्रवत्वं लक्ष्यम्[2] । द्रवत्वत्वं[3] लक्ष्यताऽवच्छेदकम् । 'आद्य-स्यन्दनासमवायि-कारणत्वं' लक्षणम् । द्वितीयादि-स्यन्दनासमवायि-कारणे=वेगादावति-व्याप्ति-वारणाय "आद्य[4]-" इत्युक्तिः । अत्र [5]'असमवायि-'पदानुपादाने आद्य-स्यन्दन-[6]समवायि-कारणेऽतिव्याप्तिः; अतस्तदुपादानम् । (i) 'सांसिद्धिकं, (ii) नैमित्तिकं चे'ति [7]विभागोक्तिः । '(i) सांसिद्धिकं जले०' [8]इत्याद्याश्रयोक्तिः ।। ३१ ।।

(२.१४ स्नेह-लक्षणम्)

**(२.१४) चूर्णादि-पिण्डी-भाव-हेतुर्गुणः स्नेहो जल-मात्र-वृत्तिः ।।३२।।**

(बाल-प्रबोधिनी) स्नेह-लक्षणमाह 'चूर्णादि०' इति । गुण-मात्रेऽतिव्याप्ति-भयाच् 'चूर्णादि-पिण्डी-भाव-हेतुः' इत्युक्तम् । जलेऽतिव्याप्ति-भयाद् 'गुण' इति । ईश्वरेच्छाऽऽदावतिव्याप्ति-निवृत्त्यै 'असाधारण-'पदमपि देयम् ।।

---

यत्पनासमवायि-कारणे" इति पाठोऽस्ति; "कारणेऽति० इत्युक्तम्" इति वाक्य-शेषश्च नास्ति ।। ३० ।।

१. दीपिका-सिद्धान्तचन्द्रोदययोरस्मत्कोषयोर्बाल-प्रबोधिन्याश्चोभयोरपि कोषयोः दीपिकायाः कतिपय-संस्करणेषु, फक्किका-युत-तर्कसङ्ग्रह-दीपिकयोः संस्करणे चात्र "आद्य-" पदं नास्ति । उपन्यासे त्वत्र "आद्य-" इत्यस्ति इति मतं प्रतीयते । न्याय-बोधिन्याम् (अस्मत्कोषे) "उत्तरत्र स्यन्दने 'आद्यत्व'-विशेषणमपि पूर्ववदेव योज्यम् ।' इत्यत्र "योज्यम्" इति (१) "देयम्" इति, (२) "व्याख्येयम्" इत्यर्थे वा स्यात् । श्रीकृष्णवल्लभाचार्य-संस्करण-गते, श्री-गुरुप्रसाद-शास्त्रि-संस्करण-गते च 'पद-कृत्ये' यद्यपि प्रतीकम् "आद्य०" इति धृतम्, परं व्याख्या तु "स्यन्दनासमवायि-कारणम्" इति पदयोरेव कृता; न तु "आद्य-" पदस्यापि । "आद्य-" पदं च व्यर्थमित्यर्थेऽस्मदीयस्तारोदयो द्रष्टव्यः ।। २. अस्मदीय-स०२ कोषयोः "द्रवत्वं लक्ष्यम् ।" इति नास्ति ।। ३. स० १ कोषे "द्रवत्वं" ।। ४. स० १-३, ५ कोषेषु "आद्य-स्यन्दनेत्युक्तम्" इति पाठः । स० ४ कोषे च "०वारणायादानम्" इत्यस्ति; "आद्य० पादानम्" इति तु नास्ति ।। ५. अस्मत्कोषे "अत्र सम०" इत्यपपाठः । स०२ कोषे "अतोऽस०" इति पाठः ।। ६. अस्मत्कोषे "असम०" इत्यपपाठः । ७. अस्मदीय-स०२ कोषयोः "द्वि-भागोक्तिः" इत्यस्ति ।। ८. [illegible] कोषेषु "जलेत्या०" इति ।। ३१ ।।

(उपन्यासः) स्नेहो लक्ष्यः। स्नेहत्वं लक्ष्यताऽवच्छेदकम्। [1]'चूर्णादि-पिण्डी-भाव-हेतुत्वे सति गुणत्वं' लक्षणम्। 'चूर्णादि-पिण्डी-भाव-हेतुत्व-'[2]मात्रोक्तौ चूर्णेऽतिव्याप्तिः; अतो 'गुणत्वम्' उक्तम्। 'गुणत्व-'मात्रमुक्तं चेत्? रूपादावतिव्याप्तिरिति बोध्यम्[3] ॥ ३२ ॥

(२.१५ शब्द-गुण-लक्षणम्)

**(२.१५) श्रोत्र-ग्राह्यो गुणः शब्द आकाश-मात्र-वृत्तिः। स द्वि-विधः —(i) 'ध्वन्यात्मको, (ii) वर्णात्मकश्च।' इति। (i) ध्वन्यात्मको भेर्यादौ, (ii) वर्णात्मकः संस्कृत-भाषाऽऽदि-रूपः ॥ ३३ ॥**

(बाल-प्रबोधिनी) शब्द-लक्षणमाह 'श्रोत्र०' इति। रूपादौ, शब्दत्व-जातौ चातिव्याप्ति-निरासाय विशेषण-द्वयम् ॥

(उपन्यासः) शब्दो लक्ष्यः। शब्दत्वं लक्ष्यताऽवच्छेदकम्। 'श्रोत्र-ग्राह्यत्वे सति गुणत्वं' लक्षणम्। श्रोत्र-ग्राह्यत्वस्य शब्दत्वेऽपि[1] सत्त्वात्, गुणत्वस्य तदितर-गुणेऽपि[2] सत्वादुभयोरप्युपादानम् ॥

'(i) ध्वन्यात्मको, (ii) वर्णात्मकश्च।' इति विभागोक्तिः। 'संस्कृत-भाषाऽऽदिरूपः।' इति स्वरूप-कथनम्[3] ॥

'आकाश-मात्र-वृत्तिः' शब्दः। पृथिव्यादि-त्रय-वृत्ति रूपम्[4]। रसो[5], गुरुत्वं च पृथिवी-जल-वृत्तिनी[6]। पृथिवी-मात्र-वृत्तिर्गन्धः। स्पर्शः[7] पृथिव्यादि-चतुष्टय-वृत्तिः। सङ्ख्यादि-विभागान्ता[8] नव-द्रव्य-वृत्तयः। स्नेहो जल-मात्र-वृत्तिः[9] ॥ ३३ ॥

(२.१६ बुद्धि-गुण-लक्षण-भेदादि-कथनम्)

**(२.१६) सर्व-व्यवहार-हेतुर्गुणो=बुद्धिर्=ज्ञानम्। सा द्वि-विधा (i)**

---

१. स० ४ कोषे "चूर्णा० लक्षणम्।" वाक्यं नास्ति ॥ २. अस्मत्कोषे "हेतुत्व-" इति नास्ति ॥ ३. इदं स० १ ३ कोषयोः "रूपा-दाविति बोध्यम्" इति, स० २ कोषे "रूपादाविति बोध्या" इति, स०४कोषे "रूपादाविति बोध्या" इति, स०५कोषे च "रूपादावतिव्याप्ति बोध्यम्" इत्यस्ति ॥ ३२ ॥

१. स० ५ कोषे "शब्देऽपि" ॥ २. अस्मत्कोषे "गुणत्वेऽपि" इत्यस्ति। स० ३, ५ कोषयोश्च "अपि" नास्ति ॥ ३. स० ३ कोषे "भाषा-रूप०" इत्यस्ति। स० ४ कोषे "रूप० पृथिव्यादि-" इति ग्रन्थो नास्ति। अस्मत्कोषे च "इति स्वरूप-" इति नास्ति ॥ ४. द्रवत्वमपि पृथिव्यप्तेजो-वृत्ति, इति तत्परिगणनमपि प्रासङ्गिकम् ॥ ५. अस्मत्कोषे "रसत्वम्" ॥ ६. अस्मत्कोषे "०-वृत्तिः" इति, स० कोषेषु च "वृत्ति" इति पाठः; विशेष्ये अपेक्ष्य विशेषणे द्वि-वचनमस्माभिर्दत्तम् ॥ ७. अस्मत्कोषे "स्पर्शो" नास्ति ॥ ८. स० १-४ कोषेषु "अपरत्वान्ता" इति, स० ५ कोषे च "परत्वान्ताः" इति पाठः ॥ ९. परत्वापरत्वे पृथिव्यादि-चतुष्टय-मनो-वृत्तिनी इति तयोरपीह परिगणनस्य प्रासङ्गिकत्वं बोध्यम् ॥ ३३ ॥

स्मृतिः (ii) अनुभवश्च—(i) संस्कार जन्यं[1] ज्ञानं=स्मृतिः; (ii) तद्भिन्नं ज्ञानम्=अनुभवः। स द्वि-विधो (क) यथाऽर्थः, (ख) अयथाऽर्थश्च—(क) तद्वति तत्प्रकारकोऽनुभवो=यथाऽर्थः; [2]यथा रजते 'इदं रजतम्।' इति ज्ञानम्; सैव[3] 'प्रमा' इत्युच्यते; (ख) तदभाववति तत्प्रकारकोऽनुभवः[4]=अयथार्थः; [2]यथा शुक्तौ 'इदं रजतम्।' इति ज्ञानम् ॥ ३४ ॥

(बाल-प्रबोधिनी) बुद्धि-लक्षणमाह 'सर्व०' इति। रूपादावीश्वरादौ चाति-व्याप्ति-भयाद्विशेषण-द्वयम्। ईश्वरेच्छा-प्रयत्नयोरदृष्टे चातिव्याप्ति-निरासाय 'तद्भिन्नत्वे सति' इत्यपि वाच्यम्। विभजति 'सा द्वि-विधा' इति। (i) स्मृति-लक्षणमाह 'संस्कार-जन्यम्' इति। 'संस्कारो'=भावना। अनुभव-ज्ञाने, संस्कार-ध्वंसे चातिव्याप्ति-निरासाय विशेषण-द्वयम्। भ्रम-ज्ञाने चातिव्याप्ति-निरासाय 'मात्र'-इत्यपि देयम्। (ii) अनुभव-लक्षणमाह 'तद्भिन्नम्' इति। स्मृतौ, तदितरे[5] सर्वत्र

---

१ उपलब्धेषु संस्करणेषु "संस्कार-मात्र-जन्यं" इति पाठः। किन्तु (१) जैकोब्यस्तर्क-सङ्ग्रहस्य १७७० ई० लिखिते कोषेऽत्र "मात्र" पदं नास्ति। (२) एकस्मिन्नन्यस्मिन्कोष इदं पदम्, अस्य दीपिका-ग्रन्थश्चेत्युभे अपि पत्रस्य पार्श्वे लिखिते स्तः, दीपिकायाः कतिपय-कोषेष्वपि "मात्र" पदस्येयं (दीपिका-गता) टिप्पणी नास्ति। (३) सिद्धान्त-चन्द्रोदये पद-कृत्ये चापि "तथाऽपि प्रत्यभिज्ञायामतिव्याप्ति-वारणाय 'संस्कार-मात्र-जन्यत्वं' विवक्षणीयम्। क्वचित्तथैव पाठः।" इति "मात्र"-पदमत्र सन्दिग्ध-मूलमित्येव सूचितम्। (४) उपन्यासे "मात्र"-रहितं "संस्कार-जन्यम्" इति लक्षणमेव व्याख्यातम्। (५) बाल-प्रबोधिन्यामपि तथैव व्याख्याय " 'मात्र'-इत्यपि देयम्।" इति कथनमस्य तन्मतेऽमौलिकतामेव सूचयति। परं (१) नीलकण्ठेन दीपिका-प्रकाशेऽस्य "मात्र"-पद-व्याख्यानस्य, (१) गोवर्धनेन न्याय-बोधिन्यां च 'मात्र'-पदस्य व्याख्यानं कृतम्। तस्मात्सन्दिग्धमिहेदं पदं मूलेऽत्र नासीत्, कालान्तरेऽत्र योजितम्; अत्रत्या दीपिका चाप्यन्नम्भट्टीया न, परं पश्चाद्योजिता इति प्रतीयते। अत एव च नेदमस्माभिरिह दत्तम् ॥ २. केषुचित्कोषेषूदाहरण-वाक्यद्वयमिदं नास्ति। प्रथम-स्थले दीपिकायां घटस्य चर्चाऽस्ति, परं नात्रेवोदाहरणत्वेन। सिद्धान्त-चन्द्रोदये, बाल-प्रबोधिन्यां तूदाहरणतयैव स्यात्। पद-कृत्ये इदं नोपलभ्यते। न्याय-बोधिनी-फक्किकोपन्यासेषु तु रजते रजतत्व-प्रतीतिरुदाहरणतया व्याख्याता। द्वितीय-स्थले दीपिकायां त्वस्य चर्चैव नास्ति। सिद्धान्त-चन्द्रोदये, पद कृत्ये, बाल-प्रबोधिन्यां चोदाह-रणतयैव प्रतीयते। न्याय-बोधिन्यादिष्वपि तथा ॥ ३. कोषेषु "सैव" इत्येव पाठः; दीपि-काऽऽदि-टीका-धृत-प्रतीकेष्वपि तथा। अथल्ये-बोडाभ्यां तु तुच्छब्देन यथाऽर्थानुभव-परामर्श दीपिकास्थं विलोक्यात्र "स एव" इति व्याकरण-लक्षण-शुद्धः पाठः शोधितः। सिद्धान्त-चन्द्रोदये तु "···निरस्यति 'सैव' इति—या यथाऽर्थानुभवात्मिका बुद्धिः, सैव 'प्रमा' इत्युच्यते; 'नान्या' इति भावः। 'सैव' इत्येव नीतम् ॥ ४. बाल-प्रबोधिनी-मते-नात्र "अनुभवः" इति न साक्षाद्, अपितु अनुषज्यते ॥ ५. अस्मत्कोषे "तदितर-सर्वं" इति

चातिव्याप्ति[६]-भयाद् विशेषण-द्वयम् । 'तद्भिन्नम्'=स्मृति-भिन्नम्' इत्यर्थः । अनुभवं विभजति 'स द्व-विध' इति । (क) यथार्थानुभव-लक्षणमाह 'तद्वति०' इति । अयथाऽर्थानुभवे, यथाऽर्थ-स्मृत्यां चातिव्याप्ति-भयाद् विशेषण-द्वयम् । घटत्वादिमति =घटादौ घटत्वादि-प्रकारकः 'अयं घटः' इत्यादि ।[७] (ख) अयथाऽर्थानुभव-लक्षणमाह 'तदभाववति०' इति । 'अनुभव' इत्यनुषज्यते । यथार्थानुभवे, अयथार्थ-स्मृत्यां[८] चातिव्याप्ति-निरासाय विशेषण-द्वयम् ॥

(उपन्यासः) बुद्धिर्लक्ष्या । बुद्धित्वं लक्ष्यताऽवच्छेदकम् । 'सर्व-व्यवहार-हेतुत्वे सति ज्ञानत्वं'[९] लक्षणम् । 'सर्व-व्यवहार-हेतुत्व'-मात्रोक्तौ कालादावतिव्याप्तिः; अतो 'ज्ञानत्वम्' उक्तम् । 'ज्ञानत्व'-मात्रोक्तौ ज्ञान-स्वरूपे[१०] ब्रह्मण्यतिव्याप्तिः, अतः 'सर्व-व्यवहार हेतुत्वम्' उक्तम्; अत्र 'हेतुत्वं' [११]चोपादान-विषयेति बोध्यम् ॥

'द्वि-विधा'[१२] इति विभागोक्तिः—(i) स्मृतिर्लक्ष्या । स्मृतित्वं लक्ष्यताऽवच्छेदकम् । 'संस्कार-जन्यत्वे' सति "ज्ञानत्वं" लक्षणम् । 'संस्कार-जन्यत्व-'[१३] मात्रोक्तौ संस्कारध्वंसेऽतिव्याप्ति.; अतः 'ज्ञानत्वम्'[१४] उक्तम् । 'ज्ञानत्व-'[१५] मात्रमुक्तं चेत्? अनुभवेऽतिव्याप्तिः; अतः 'संस्कार-जन्यत्वम्' उक्तम् ।

(ii) अनुभवो लक्ष्यः । अनुभवत्वं लक्ष्यताऽवच्छेदकम् । 'स्मृति-भिन्नत्वे सति 'ज्ञानत्वं' लक्षणम् । 'स्मृति-भिन्नत्व'-मात्रोक्तौ[१६] घटादावतिव्याप्तिः; अतो 'ज्ञानत्वम्' उक्तम् । 'ज्ञानत्व'-मात्रोक्तौ[१७] स्मृतावतिव्याप्तिः; अतः 'स्मृति-भिन्नत्वे सति' विशिष्टमुपात्तम् । 'स द्वि-विध'[१८] इति विभागोक्तिः—

(क) यथाऽर्थानुभवो लक्ष्यः । यथाऽर्थानुभवत्वं लक्ष्यताऽवच्छेदकम् । 'तद्वति तत्प्रकारकत्वं'[१९] लक्षणम् । [२०]अस्ति चेदं लक्षणम्—रजते 'इदं रजतम्' इत्यत्र 'रजतत्ववद्विशेष्यकत्वे[२१] सति रजतत्व-प्रकारकत्वम्'[२२] इति लक्ष्ये लक्षण-सङ्गतिः । " 'सति'-अन्त-"मात्रोक्तौ रजते 'इद रङ्गम्[२३]" इत्याकारक-भ्रमेऽति-व्याप्तिः । [२४]रजतत्ववद्विशेष्यकत्वस्य सत्त्वात्; अतो विशेष्य-दलम् । 'विशेष्य-दल'-मात्रोक्तौ

---

पाठः ॥ ६. अस्मत्कोषे "व्याप्ति-" इति नास्ति ॥ ७ स० कोषे "इत्यादिवति" इति पाठः । ८. अस्मत्कोषे "०थार्था-स्मृत्यां" इति पाठः ॥ ९. अस्मत्कोषे "ज्ञानवत्वं" ॥ १०. अस्मत्कोषे "ज्ञान-स्वरूप-ब्र०" इति, स०५ कोषे "ज्ञानरूपे" इत्यस्ति ॥ ११ स०२ कोषे "त्वं व उपा०" ॥ १२. स० कोषेषु "द्विधा" इति ॥ १३. अस्मत्कोषे "'जन्य-'मात्रोक्तौ" इति, स० १ कोषे "जन्यत्व-माशेक्तौ" इति पाठः ॥ १४. स० ४ कोषे "संस्कार-जन्यत्व-ज्ञा०" इति पाठः ॥ १५. स०४ कोषे "०त्रमुक्तमुक्तं" पाठः ॥ १६. अस्मत्कोषे "०त्व-मात्रमुक्तौ घट-पटा०" इत्यस्ति ॥ १७. स० ५ कोषे "स्मृतादाव०" इति पाठः । १८. स० १, ३-४ कोषेषु "सा०" इति, अस्मत्कोषे च "सा द्वि-विध इति" ॥ १९. स० २ कोषे "तत्प्रकारत्वं" ॥ २०. अस्मत्कोषे "अस्ति० लक्षणम्" इति नास्ति । स० ५ कोषे "अस्ति चेदिदं ल०" इति पाठः ॥ २१. अस्मत्कोषे "०शेष्यत्वे" इत्यस्ति ॥ २२. स० ४ कोषे "०प्रकारत्व०" इति ॥ २३. अस्मत्कोषे "अयं रङ्ग" इति ॥

रङ्गे[२५] 'इदं रजतम्' इत्याकारक-भ्रमेऽतिव्याप्तिः; रजतत्व-प्रकारकत्वस्य सत्त्वात्; अतः 'सति'-अन्तम्; तत्र [२६] रजतत्ववद्विशेष्यकत्वस्याभावन्नातिव्याप्तिः। कालिक-सम्बन्धेन रजतत्ववद्रङ्ग[२७]-विशेष्यक-समवाय-सम्बन्धेन रजतत्वप्रकारक-भ्रमेऽतिव्याप्तिः; [२८]तद्वद्विशेष्यकत्वे सति तत्प्रकारकत्वस्य सत्त्वात्; अतः 'समवाय-सम्बन्धेन [२९]तद्वद्विशेष्यकत्वं' निवेश्यम्[३०]; तत्र समवाय-सम्बन्धेन रजतत्ववद्विशेष्यकत्वाभावान्नातिव्याप्तिः। [३१]रजते कालिक-सम्बन्धेन[३२]रङ्गत्व-प्रकारक-रजत-विशेष्यक-भ्रमेऽतिव्याप्ति-वारणाय 'समवाय-सम्बन्धेन तत्प्रकारकत्वं' निवेश्यम्[३३]; तत्र समवाय-सम्बन्धेन रजतत्व-प्रकारकत्वाभावान्नातिव्याप्तिः। रङ्ग-रजतयोः 'इमे रजत-रङ्गे' इत्याकारक-विपरीत-[३४]भ्रमेऽतिव्याप्तिः; तत्र समवाय-सम्बन्धेन रजतत्ववद्विशेष्यकत्वे सति समवाय-सम्बन्धेन [३५]रजतत्व-प्रकारकत्वस्य सत्त्वात्; अतः 'तत्सम्बन्धावच्छिन्न-[३६]तद्वद्विशेष्यकत्वावच्छेदेन तत्सम्बन्धेन तत्प्रकारकत्वम्' निवेश्यम्[३३]; तत्र [३७]तद्वद्विशेष्यकत्वावच्छेदेन तत्प्रकारकत्वाभावा[३८]न्नातिव्याप्तिः। एवं च[३९] 'तद्रजतम्' इत्याकारक-स्मृतावतिव्याप्तिः; [४०]तद्वद्विशेष्यकत्वे सति[४१] तत्प्रकारकत्वस्य सत्त्वात्; अतः 'अनुभवत्वम्' अपि निवेश्यं; तत्रानुभवत्वाभावा[४२]न्नातिव्याप्तिः। एवं च "तत्सम्बन्धावच्छिन्न-[४३]तद्वद्विशेष्य-

---

२४. स० कोषेषु "रजतत्ववि०" इत्यस्ति। स० ४ कोषे "विशेष्य-दलम्" इति नास्ति॥ २५. कोषेषु "रङ्गे" इति नास्ति, तथाऽप्यावश्यकत्वादीदृश-स्थले (=रजते रङ्गत्व-भ्रम-स्थले) उपरिष्टाद् "रजते" इति सत्त्वाच्चास्माभिरिदं पदमिह सन्न्यवेशि॥ २६ "तत्र इत्यतः प्रागस्मत्कोषे "रङ्गे 'इदं रजतम्'" इति पाठोऽधिकः। "तत्र" इत्यस्य व्याख्यानमेवैतत्। अस्मत्कोषे-स० १,५ कोषेषु "तत्र रजतववद्वि०" इति पाठः। स० ४ कोषे च "तत्र०...त्वस्य भावान्ना०" इति पाठः। २७. स० ४ कोषे '०वद्गन्ध-वि० इति॥ २८ अस्मत्कोषे "तद्विशे०" इति॥ २९. अस्मत्कोषे "तद्विशे०" इति, स० १-२ कोषयोः "रजतवद्विशि०" इति, स० ४ कोषे "रजत-विशे०" इति, स० ३, ५ कोषयोश्च यथा-धृत-पाठः॥ ३०. स० १, ३ कोषयोः "निवेश्य" इत्यस्ति। द्रष्टव्या टिप्पणी ३३॥ ३१. अस्मत्कोषे "रजते" नास्ति॥ ३२. अस्मत्कोषे "रङ्गत्व... समवाय-सम्बन्धेन" इति यावान् ग्रन्थो नास्ति; स० ४ कोषे "रङ्गत्व" स्थाने "रज-तत्व-" इत्यस्ति॥ ३३. स० ३ कोषे "निवेश्य" इत्यस्ति। द्रष्टव्याटिप्पणी ३०॥ ३४. अस्मत्कोषे 'विपरीत-" इति नास्ति॥ ३५. स० ३ कोषे "रजतत्व-प्रकारस्य" इति, स० ४ कोषे च "रजतत्ववत्प्र०" इत्यस्ति। ३६ स० ४ कोषे 'तद्ववि०" इत्यस्ति॥ ३७. स० १ कोषे "तद्विशे...त्वाभावावच्छे०" इति पाठः। स० २ कोषे" "तद्वद्विशेष्यत्वाभावा०" इति लिखित्वा "भावा" इति हरितालिकयाऽविद्यमानमिव कृतम्। स० ४ कोषे "तद्वद्विशेष्यकत्वाभावाव०" इत्यस्ति। स० ५ कोषे पुनः "तद्वद्विशेष्यत्वाभावच्छेदेन" इत्यस्ति। अस्मत्कोषे स० ३ कोषे च यथाधृत-पाठः। प्रमाणं सुधियां सुधीः॥ ३८ अस्मत्कोषे "भावा" इति नास्ति॥ ३९. "एवं च" इति स०५ कोष एवास्ति॥ ४०. अस्मत्कोषे "तद्विशे०" इत्यस्ति॥ ४१. "सति" स० १, ३-५ कोषेषु नास्ति॥ ४२. अस्मत्कोषे-स० १,४-५ कोषेषु "भावा" इति नास्ति॥

कत्वावच्छेदेन तेन सम्बन्धेन तत्प्रकारकानुभवत्वं' [४४]प्रमाया लक्षणम् ।" इति पर्यवसन्नम् ।

(ख) अयथार्थानुभवो लक्ष्यः। अयथार्थानुभवत्वं लक्ष्यताऽवच्छेदकम्।[४५] 'तदभाववति तत्प्रकारकानुभवत्वं' लक्षणम्। [४६]अस्ति चेदं लक्षणम्—शुक्तौ 'इदं रजतम्' इत्याकारक-ज्ञानेऽतिव्याप्तिः;[४७] तदभाववच्छुक्ति-विशेष्यकत्वे सति रजतत्व-प्रकारकत्वात्[४८] । 'तत्प्रकारकत्व'-मात्रोक्तौ[४९] 'इदं रजतम्' इत्याकारक-प्रमाया-मतिव्याप्तिः; तत्प्रकारकत्वस्य तत्र सत्त्वात्; अतः 'तदभाववद्विशेष्यकत्वम्' उक्तम्। '[५०]तदभावद्विशेष्यकत्व-'मात्रोक्तौ 'रजतत्वाभाववद्[५१] भूतलम्' इत्याकारक-ज्ञानेऽतिव्याप्तिः; [५२]तदभाववद्भूतल-विशेष्यकत्वस्य सत्त्वात; अतः 'तत्प्रकारकत्वम्'[५३] उक्तम्। '[५४]द्रव्यं संयोगि' इत्याकारक-प्रमायामतिव्याप्तिः; तदभाववद्विशेष्यकत्वे सति तत्प्रकारकत्वस्य[५४] सत्त्वात्; संयोगस्याव्याप्य[५५]-वृत्तित्वात्; अतः भ्रम-लक्षण-घटकीभूताभावे 'प्रतियोगि-व्यधिकरणत्वं' विशेषणं [५६]देयम्; [५७]'संयोगि' इत्याकारक-प्रमायां संयोगाभावस्य प्रतियोगि-समानाधि-करणत्वान्नातिव्याप्तिः। 'संयोग-सम्बन्धेन रजतत्वाभाववद्रजत-विशेष्यक[५८]-रजतम्' इत्याकारक-ज्ञानेऽतिव्याप्ति-वारणाय 'समवाय-सम्बन्धावच्छिन्न-प्रतियोगिताकत्वम्' अप्यभावे[५९] विशेषणं बोध्यम्। कालिक-सम्बन्धेन[६०] रजतत्वाभाववद्रजत-विशेष्यक-समवाय-सम्बन्धेन रजतत्व-प्रकारक[६१]-रजत-प्रमाया-मतिव्याप्ति-वारणाय 'तदभाववद्' इत्यत्र 'दैशिक-सम्बन्धेन तदभाववत्त्वं' बोध्यम्। एवं च " 'तत्सम्बन्धावच्छिन्न-प्रतियोगिताक-प्रतियोगि-व्यधिकरण-दैशिक-विशेषणता-[६२]सम्बन्धेन तदभाव[६३]वद्विशेष्यकत्वे सति तत्सम्बन्धेन तत्प्रकारकत्वं' भ्रम-लक्षणम्।" इति[६४] पर्यवसन्नम्[६५]। प्रकारतायां 'तत्सम्बन्धा[६६]वच्छिन्नत्वा'नुपादाने समवाय-

---

४३. अस्मत्कोषे "तद्विशे०" इत्यस्ति ॥ ४४. स० ५ कोषे "प्रमायाः...नुभवत्वम् इत्यन्तो ग्रन्थो नास्ति ॥ ४५. स० ३ कोषे इतोऽग्रे "तदभानतत्प्रका" इत्यस्ति ॥ ४६. अस्मत्कोष इदं वाक्यं नास्ति ॥ ४७ स० कोषेषु "अतिव्याप्तिः" इति नास्ति ॥ ४८. अस्मत्कोषे "तद्भाव...प्रकारकत्वम् ।" इत्यस्ति ॥ ४९. अस्मत्कोषे "त्व" इति "इदं रज...विशेष्यकत्व'-मात्रोक्तौ" इति यावान्ग्रन्थः, स० ५ कोषे च "क्तौ" इति नास्ति ॥ ५०. स०५ कोषे "०ऽतिव्याप्तिः" इति यावान्ग्रन्थो नास्ति ॥ ५१. अस्मत्कोषे "भावाद्" ॥ ५२. स० कोषेषु "तद्भाव०" इति ॥ ५३. अस्मत्कोषे 'त्वं' नास्ति ॥ ५४. अस्मत्कोषे "द्रव्य-सं०" ॥ ५५. अस्मत्कोषे "०स्याव्याप्त-" इति ॥ ५६. अस्मत्कोषे "···णत्वं-" ॥ ५७. स०५कोषे वाक्यमिदं "संयोग-सामानाधिकरणत्वान्नातिव्याप्तिः ।" इत्यस्ति ॥ ५८. अस्मत्कोषे "०वद्भूतल-" इति ॥ ५९. अस्मत्कोषे "०प्यभाव वि०" इत्यस्ति ॥ ६०. अस्मत्कोषे "न" नास्ति ॥ ६१. अस्मत्कोषे "प्रकारक-रजत" इति नास्ति ॥ ६२. अस्मत्कोषे "तत्स०" इति ॥ ६३. अस्मत्कोषे "तद्भाव-वि०" इत्यस्ति ॥ ६४ अस्मत्कोषे "इति" नास्ति ॥ ६५. अस्मत्कोषे "सम्पन्नम्" इति पाठः ॥ ६६. अस्मत्कोषे "'तत्सम्बन्धा'नुपादाने" इत्यस्ति ॥

सम्बन्धेन रजतत्वाभाववच्छुक्ति-विशेष्यक-कालिक-सम्बन्धेन रजतत्व-प्रकारक-प्रमाया-मतिव्याप्तिः; अतस्तदुपादानम् । इति ध्येयम्[६७] ॥ ३४ ॥

(२-१६ बुद्धि-गुण लक्षणे (क) यथार्थानुभवस्य लक्षणम्)

**(२.१६. ii.[१] क) यथाऽर्थानुभवश्चतुर्विधः—(अ) प्रत्यक्ष-(आ) अनुमिति-(इ) उपमिति- (ई) शाब्द-भेदात् । तत्करणमपि चतुर्विधम्—(अ) प्रत्यक्ष-(आ) अनुमान-(इ) उपमान-(ई) शब्द-भेदात् ॥ ३५ ॥**

(बाल-प्रबोधिनी) **यथाऽर्थानुभवं** विभजते 'यथार्था०' इति । तत्करणमाह 'तत्करणमपि' इति ॥

(उपन्यासः) **'यथार्थानुभवश्चतुर्विधः'** इत्यादिना विभागोक्तिः । 'तत्करणमपि चतुर्विधम्' इत्यादिना करण-विभागोक्तिः ॥ ३५ ॥

(२.१६ बुद्धि-विवरणे यथार्थानुभव-प्रकरणे करण-कार्य-करणानां लक्षणानि)

**(२.१.६.ii.क) [१]असाधारणं कारणं=करणम् । [२]कार्य-नियत-पूर्व-**

---

६७. अस्मत्कोपे **"बोध्यम्"** इत्यस्ति ॥ ३४ ॥

१. 'गुण'-नामक-द्वितीय(२)-पदार्थस्य षोडशस्य (.१६) भेदस्य 'बुद्धेः' द्वितीयस्य(ii) **'अनुभव'**-नामक-भेदस्य प्रथमो (.क) भेदो **'यथार्थ'** इति प्रथमं ३५–५३ सङ्ख्यकेष्वनुच्छेदेषु व्याख्यायि । ततः परस्तात् ५४ अनुच्छेदे द्वितीयो (.ख) भेदः **'अयथार्थ'** इति निरूपितः । ततश्च **'बुद्धेः'** प्रथमस्य ( i) 'स्मृति'-नामक-भेदस्य विवरणं ५५ अनुच्छेदे व्यधायि इत्यत्र प्रथमं '(ii)' इति सङ्ख्या वर्तते ॥ ३५ ॥

१. "मम द्वयेतरेष्वाधार-ग्रन्थेष्विह **'व्यापारवद्'** इत्यप्यस्ति ।" इति बोडाः । उपन्यासे व्याख्यातमपि पदमिदमिह मौलिकं न प्रतीयते। तथाहि—(१) दीपिका-सिद्धान्तचन्द्रोदय-पदकृत्य-न्यायबोधिनी-बालप्रबोधिनी-प्रकाश-नृसिंहप्रकाशिका-प्रभृतिषु नैक-टीकासु न केवलं प्रतीकमेव **"असाधारण-"** इत्यस्ति, परं क्वचिद् **"व्यापारवद्-"** इत्यर्थतः पर्यवसितम्, क्वचिच्च **"देयम्"**, **"वक्तव्यम्"** इति मूलेऽसदेव सूचितम् ॥
२. बोडासः कतिपयेष्वाधारेष्विह **"अनन्यथा-सिद्ध-"** इत्यप्यस्ति । इदं वाक्य-वृत्तौ प्रतीकत्वेन धृतम् । उपन्यासस्याधार-ग्रन्थेष्वपि कदाचिदिहेदं विशेषणं स्यात्—तत्र हि यद्यपि लक्षणमनेन पदेन रहितमेव दत्तम्, परमग्रे **" 'अनन्यथा-सिद्ध-कार्य-नियत-पूर्व-वृत्तित्वम्' इति विशिष्टमुपात्तम् ।"** इत्युक्तम् । इदं 'विशिष्टोपादानम्' व्याख्योपलब्धं (पर्यवसितं) वा, मौलिकं वा, इति नेह स्पष्टम् । अस्य कथनस्य मूलं च दीपिकायाः **"ननु 'तन्तु-रूपमपि पटं प्रति कारणं स्यात् ।' इति चेत् ? न; 'अनन्यथा-सिद्धत्वे सति' इति विशेषणात् ।"** इति कथनं प्रतीयते । दीपिकायाष्टीकासु लक्षण-गत-**'नियत-'**पदोपादानेन 'अनन्यथा-सिद्धत्व-'लाभोक्तेरिदं पदमिह न मौलिकम् । दीपिकायां प्रतीकमपि **'कार्य-'** इत्येव धृतम् । एवमेव न्यायबोधिनी-पदकृत्य-बालप्रबोधिनी-निरुक्ति-प्रभृति-टीकास्वपीदमेव प्रतीकं धृतम् । इदमिदं न्यायबोधिन्यां **"निवेशनीयम्"** इति, पद-कृत्ये **"फलितम्"** इति, बाल-प्रबोधिन्यां च **"देयम्"** इति प्रोक्तम् । तस्माद्

वृत्ति=कारणम् । कार्यं=प्रागभाव-प्रतियोगि । कारणं त्रि-विधं (i) समवायि-(ii) असमवायि-(iii) निमित्त-भेदात् । (i) यत्समवेत कार्यमुत्पद्यते, तत्समवायि-कारणम् । यथा (क) तन्तवः पटस्य; (ख) पटश्च स्व-गत-रूपादेः । (ii. क) कार्येण, (ख) कारणेन वा सह (अ) एकस्मिन्नर्थे समवेतत्वे सति[3] (आ) कारणम्=असमवायि-कारणम् । यथा—(क) तन्तु-संयोगः पटस्य; (ख) तन्तु-रूपं पट-रूपस्य । (iii) तदुभय-भिन्नं कारणं=निमित्त-कारणम् । यथा—तुरी-वेमादिकं पटस्य ॥

तदेतत्त्रि-विध-कारण-मध्ये यदसाधारणं कारणं, तदेव करणम् ॥ ३६ ॥

(बाल-प्रबोधिनी) करण-लक्षणमाह 'असाधारण' इति । ईश्वरादौ, कार्ये चातिव्याप्ति-वारणाय पद-द्वयम् । व्यापारेऽतिव्याप्ति-वारणाय 'व्यापारवद्' इत्यप्यादौ देयम् ॥

कारण-लक्षणमाह 'कार्य-नियत०' इति । कार्येऽतिव्याप्ति-वारणाय 'पूर्व०' इति । रासभादौ तन्निरासाय 'नियत-' इति । 'कस्य पूर्व-वृत्ति ?' इत्याकाङ्क्षा-पूरणाय 'कार्य-' इति । कारण-गुण-जात्यादावतिव्याप्ति-निरासाय 'अनन्यथा-सिद्धम्' इत्यपि देयम् । यस्य येन सहैव यत्प्रति पूर्व-वृत्तित्वम्, [4]तत्तत्प्रति तेनान्यथा-सिद्धम् । कारण-गुण-जात्यादेस्तु कारणेन सहैव कार्यं प्रति [5]पूर्व-वृत्तित्वेनान्यथा-सिद्धत्वान्न तत्रातिव्याप्तिः ॥

कार्य-लक्षणमाह 'प्राग्०' इति । अभाव-प्रतियोगित्वं नित्येष्वप्यस्ति; तत्रातिव्याप्ति-निरासाय 'प्राग्-' इति ॥

कारणं विभजते 'कारणं त्रिविधम्' इति । (i) समवायिकारण-लक्षणमाह 'यत्समवेतम्' इति । 'यस्मिन्समवेतं=नित्य-[6]सम्बद्धं कार्यमुत्पद्यत' इत्यर्थः, तथा च न निमित्तादावतिव्याप्तिः; कुविन्द-तुरी-वेमादौ पटादि-नित्य-सम्बन्धाभावात् । समवायि-कारणमुदाहरति द्विधा 'यथा—' इत्यादि । (ii) असमवायि-कारणं लक्षयति

---

बहुतर-प्रमाण-विरोधादिहेदं पदं न मौलिकमित्यवसीयत इति दिक् ॥ ३. केषुचित्संस्करणेषु "समवेतं सत्" इति पाठः । न्याय-बोधिन्यां स एव व्याख्यात इति प्रतीयते । परं बाल-प्रबोधिन्यां यथा-धृत-पाठ एव धृतः; तेनैव च व्याख्यानमपि बाल-प्रबोधिन्यां वाक्य-वृत्तौ चाकारि । स-वाक्यवृत्तिके (१८७३ ई० संस्करणे) स-प्रकाश-भास्करोदये (निर्णय-सागर-संस्करणे) तर्क-सङ्ग्रहेऽत्र लब्धो "यत्कारणम्, तद्" इति पाठः स्पष्टतरत्वेन बोडासाऽपि स्वीकृतः । पद-कृत्ये, न्याय-बोधिन्या अस्मत्कोषे, श्रीकृष्ण-वल्लभाचार्य-संस्करणे चेह यत्तदौ स्तः । न्याय-बोधिन्या इतर-संस्करणेषु तु नेमौ । एतस्मिन्प्रकरणे करण-लक्षणोपसंहारेऽपि यत्तदौ स्तः; इत्यत्रापि कदाचित्स्याताम् । परमधिक-ग्रन्थेष्वनुपलब्धेः सन्दिग्धत्वादस्माभिर्मूले न निवेशितौ ॥ ४. अस्मत्कोषे "तत्प्रति" ॥ ५. अस्मत्कोषे "पूर्वं वृ०" ॥ ६. अस्मत्कोषे "नित्यं स०" ॥

'कार्येण०' इति । कारण-मात्रेऽतिव्याप्ति-भयात् 'समवेतत्वे सति' इति; तथाऽपि 'समवेतः पटः स्व-गत-रूपादि-समवायी', इति नातिव्याप्ति-परिहारः, अतः '(क) कार्येण' इत्याद्युक्तम् । अत्र 'वा' शब्देन लक्षण-द्वयं विवक्षितम्—'(क) कार्येण सह (अ) एकस्मिन्नर्थे समवेतत्वे सति (आ) [7]कारणम् । (ख) कारणेन सह (अ) एकस्मिन्नर्थे समवेतत्वे सति[7] (आ)कारणं' च । (क)आद्यमुदाहरति 'यथा—' इति—तन्तु-संयोगः (क) कार्येण=पटेन सह (अ) एकस्मिन्नर्थे=तन्तौ समवेतः (आ) पटस्य कारणम् । (ख) द्वितीयमुदाहरति 'तन्तु-रूपम्०' इति—तन्तुरूपं (ख)पट-रूप-कारणेन =पटेन सह (अ) एकस्मिन्नर्थे=तन्तौ समवेतं (आ) पट-रूपं प्रति कारणम् । (iii) निमित्त-कारण-लक्षणमाह 'तदुभय०' इति । उक्तोभय-विध-कारणेऽतिव्याप्ति-भयात् '(क-ख) तदुभय-भिन्नम्' इति । कार्ये तत्परिहाराय '(ग) कारणम्' इति ।।

करण-लक्षणमुपसंहरति 'तदेतद्०' इति ।।

(उपन्यासः) करणं लक्ष्यम् । करणत्वं लक्ष्यताऽवच्छेदकम् । 'व्यापारवत्त्वे सत्यसाधारण-कारणत्वं'[8] लक्षणम् । अस्ति चेदं लक्षणम्—(अ) प्रत्यक्ष-ज्ञान-करणे इन्द्रियार्थ-संयोगो व्यापारः; तादृश-व्यापारवत्त्वे सति 'अयं घट' इत्याकारक-ज्ञानं प्रत्य-साधारणत्वमिन्द्रियादावस्ति, इति लक्षण समन्वयः । एवं (आ) 'पर्वतो[9] वह्निमान्' इत्याकारकानुमितिं प्रति 'वह्नि-व्याप्य-धूमवान् पर्वत' इत्याकारक-[10]व्यापारवत्त्वे सत्यसाधारण-कारणत्वस्य व्याप्ति-ज्ञाने सत्त्वात् । (इ) 'गवयो गवय-पद-वाच्य'[11] इत्याकारकोपमितिं प्रत्यतिदेश-वाक्यार्थ-स्मरण-रूप-व्यापारवत्त्वे सत्यसाधारण-कारण-त्वस्य[12] 'गो-सदृशो गवय' इति सादृश्य-ज्ञाने सत्त्वात् । (ई) 'गवानयनानुकूल-कृति-मान्[13]' इत्याकारक-शाब्द-बोधं प्रति पद-जन्य-पदार्थोपस्थिति-रूप-व्यापारवत्त्वे सत्यसाधारण-कारणत्वस्य पद-ज्ञानेऽपि सत्त्वात् ।

अत्र 'व्यापारवत्त्व-'मात्रोक्तौ घटेऽतिव्याप्तिः; अतः 'असाधारण-'इत्यादि; प्रत्यक्ष-ज्ञानं प्रति [14]विषयस्य साधारण-कारणत्वेनासाधारण-कारणत्वाभावान्नाति-व्याप्तिः; तस्यानुमित्यादि-[15]साधारणत्वादिति[16] बोध्यम् । अत्र 'असाधारण-' पदानुपादाने[17] कालेऽतिव्याप्तिः; अतस्तदुपादानम् ।।

व्यापारो लक्ष्यः । व्यापारत्वं लक्ष्यताऽवच्छेदकम् । 'तज्जन्यत्वे सति[18]तज्जन्य-जनकत्वं' लक्षणम् । अस्ति चेदं लक्षणम्—(अ) व्यापार-सामान्ये जन्ये[19] इन्द्रिय-

---

७. अस्मत्कोषे "कारणम् ।...सति" इति ग्रन्थो नास्ति ।। ८. अस्मत्कोषे "असाधारण-त्वं' इति, स०५कोषे च "असाधारण-कारणं करणस्य लक्ष०" इत्यस्ति ।। ९. स०१ कोषे "पर्वतो" नास्ति ।। १०. अस्मत्कोषे "व्यापार०कारणत्वस्य" नास्ति ।। ११. स०१कोषे "०वाच्यम्" इत्यस्ति ।। १२. अस्मत्कोषे "कारण" नास्ति ।। १३. अस्मत्कोषे "वृत्तिमान्" इति, स०५कोषे च "वृतिमान्" इत्यस्ति ।। १४. अस्मत्कोषे "विषयस्य० कारणत्वेन" इति ग्रन्थो नास्ति ।। १५. स०५कोषे "असा०" इति पाठः ।। १६. अस्मदीय-स०५कोषयोः "ति" नास्ति ।। १७. [illegible]: "असाधारणत्वोपादाने" ।।

जन्यत्वे सतीन्द्रिय-जन्यम् 'अयं घट' इत्याकारक-[20]ज्ञानम्, तज्जनकत्वस्य[21] चेन्द्रियार्थ-सन्निकर्षे सत्त्वात्; (आ) व्याप्ति-ज्ञान-जन्यत्वे सति व्याप्ति-ज्ञान-जन्य-'पर्वतो वह्नि-मान्-' इत्याकारकानुमिति-जनकत्वस्य[22] 'वह्नि-व्याप्य-धूमवान्' इत्याकारक-परामर्शे =[23]व्यापारे सत्त्वात्; (इ) सादृश्य-ज्ञान-जन्यत्वे सति सादृश्य-ज्ञान-जन्य-'गवयो गवय-पद-वाच्य'-इत्याकारक-ज्ञान-जनकत्वस्यातिदेश-वाक्यार्थ-स्मरण-रूप-व्यापारे[24] सत्त्वात्; (ई) पद-ज्ञान-जन्यत्वे सति पद-ज्ञान-जन्य-शाब्द-बोधात्मक-ज्ञान-जनकत्वस्य पद-जन्य-पदार्थोपस्थिति-रूप-व्यापारेऽपि सत्त्वाल्लक्षण-समन्वयः ।

'तज्जन्यत्व-' मात्रोक्तौ 'अयं घट' इत्याकारक-ज्ञानेऽतिव्याप्तिः; इन्द्रियजन्यत्वस्य तत्र सत्त्वात्; अतः 'तज्जन्य-जनकत्वम्[25]' इत्युक्तम् । तावन्मात्रोक्तौ[26] इन्द्रियेऽतिव्याप्तिः[27]; इन्द्रिय-जन्य-ज्ञान-जनकत्वस्य[28] तत्र सत्त्वात्; अतः 'तज्जन्य-जन्यत्वे[29] सति' इत्युक्तम् ॥

कारणं लक्ष्यम्, कारणत्वं लक्ष्यतावच्छेदकम् । 'कार्य-नियत-पूर्व-वृत्तित्वं' लक्षणम् । अत्र 'कार्य-पूर्व-वृत्तित्व-' मात्रोक्तौ रासभादावतिव्याप्तिः; अतो 'नियत-' इत्युक्तम् । 'नियतत्व-' मात्रोक्तौ गगनादावतिव्याप्तिः; अतः 'पूर्व-वृत्तित्वम्' उक्तम् । 'पूर्व-वृत्तित्व-' मात्रोक्तौ दण्ड-रूपादावतिव्याप्तिः; अतो '[30]नियत-पूर्व-वृत्तित्वम्' इति विशिष्टमुपात्तम्; 'नियतत्वं' च कार्यतावच्छेदक-सम्बन्धावच्छिन्न-[31]कार्यतावच्छेदकावच्छिन्न-कार्याधिकरण-वृत्ति[32] ।

कारणतावच्छेदक-सम्बन्धावच्छिन्न-प्रतियोगितावच्छेदकावच्छिन्न-प्रतियोगिताको योऽभावः, तादृशाभाव[33]-प्रतियोगितानवच्छेदक-धर्मवत्त्व-रूप-नियम-घटित-कारणत्वं कारण-सामान्य-लक्षणम् ।

---

१८. स०३ "सति" नास्ति । स०४ : "सति जन्य-ज०" इति पाठः ॥ १९. स० कोषेषु नास्ति । अस्मत्कोषे एवेदम् ॥ २०. स०५कोषे "० त्याकारक-ज्ञान-जनकत्वमिन्द्रिया०" इति ॥ २१. अस्मत्कोषे "०ज्जनकम्" इति, स०कोषेषु "०ज्जनकत्वमि०" इत्यस्ति, २२. अस्मत्कोषे० "०जनकस्य" इत्यस्ति ॥ २३. स०५कोषे एव "परामर्शे" इत्यस्ति; तत्र "व्यापारे" इति च नास्ति । स्पष्टार्थकत्वादस्माभिरुभयमपि स्वीकृतम् ॥ २४. स०५कोषे "अपि" इत्यप्यस्ति ॥ २५. स०१कोषे "त्व" नास्ति ॥ २६. स०१कोषे "तावनात्रोक्तौ" इति, स०५कोषे च 'तावन्मात्रोपादाने" इत्यस्ति ॥ २७. स०४कोषे "इन्द्रिये मात्रोक्तौ दण्ड-रूपादावति०" इति पाठः ॥ २८. अस्मदीय-कोषे "०जन्य-जनकत्वस्य" इति, स०४कोषे "०इन्द्रिय-जन्य-जनकस्य" इति, स०५कोषे च '०जन्य-ज्ञानत्वस्य" इत्यस्ति ॥ २९. अस्मत्कोषे "तज्जन्य-जनकत्वे" इति, स० ४-५ कोषयोश्च "तज्जन्यत्वे" इत्यस्ति ॥ ३०. अस्मत्कोषे इतः प्राग् "अनन्यथा-सिद्ध-कार्य-" इत्यप्यस्ति । स०५कोषे "नियत ··· उपात्तम् ।" इत्यस्य स्थाने " 'अनन्यथा-सिद्ध-' पदमपि निवेश्यम्; दण्ड-रूपादीनामन्यथा-सिद्धत्वात् ।" इति वाक्यमस्ति ॥ ३१. अस्मत्कोषे "कार्यता-" इत्यस्य स्थाने "कार्याधि" इत्यपपाठः ॥ ३२. अस्मत्कोषे एव "०वृत्ति का०" इति, इतरत्र तु "वृत्तिः का०" इति पाठः ॥ ३३. अस्मत्कोषे

अस्ति चेदं लक्षणम्—घट-निष्ठ-कार्यता-निरूपित[३४]-दण्ड-निष्ठ-कारणतायां[३५]कार्यताऽवच्छेदकीभूत-समवाय-सम्बन्धावच्छिन्न-कार्यताऽवच्छेदकीभूत-घटत्वावच्छिन्न-घटाधिकरण-कपाल-निष्ठो योऽभावः—नहि कारणताऽवच्छेदकी-भूत-स्व-संयुक्त-चक्र-भ्रमिता-सम्बन्धावच्छिन्न-कारणताऽवच्छेदकीभूत-दण्डत्वावच्छिन्नाभावः[३६], अपितु पटाभावः—तस्य प्रतियोगिताऽवच्छेदकं=पटत्वम्, अनवच्छेदको यो धर्मो=दण्डत्वम्, [३७]तद्वत्वे सति कारणत्वस्य दण्डे सत्त्वाल्लक्षण-समन्वयः ।

‘[३८]अनवच्छेदक-धर्मवत्त्व-’मात्रोक्तौ गगनेऽतिव्याप्तिः; अतः ‘कारणत्वम्’ उक्तम् । ‘कारणत्व-’ मात्रोक्तौ[३९] लक्षण-लक्ष्यताऽवच्छेदकयोरैक्य-प्रसङ्गः, अतो विशिष्टमुपात्तम् ।।

कार्यं लक्ष्यम् । कार्यत्वं लक्ष्यताऽवच्छेदकम् । ‘प्रागभाव-प्रतियोगित्वं’ लक्षणम् । [४०]अस्ति चेदं ‘घट’-रूप-कार्ये; प्रागभाव-प्रतियोगित्वस्य तत्र सत्त्वात् ।

‘[४१]कारणं त्रि-विधम्’ इति [४२]विभागोक्तिः । (i) समवायि-कारणं-लक्ष्यम् । समवायि-कारणत्वं लक्ष्यताऽवच्छेदकम् । ‘समवेत-कार्य-जनकत्वं’ लक्षणम्[४३] । (‘यत्समवेतत्वे सति कार्यमुत्पद्यते, तत्समवायि-कारणम् ।’ इति लक्षणम् । “ ‘यत्कार्यमुत्पद्यते ।’ इत्येवास्तु, ‘समवेतत्वे सति’ इति किमर्थम् ?” इति चेत् ? ध्वंसेऽतिव्याप्तिः; अतः ‘समवेत०’ इति । तावन्मात्रोक्तौ सामान्येऽतिव्याप्तिः; अतः ‘कार्यमुत्पद्यते ।’ इति । इत्थं च ‘समवाय-सम्बन्धावच्छिन्न-कार्यता-निरूपित-तादात्म्य-सम्बन्धावच्छिन्न-कारणता=समवायिकारणता । ‘यथा (क) तन्तव०’ इति—तन्तु-समवेतस्य पटस्योत्पत्तेः । ‘(ख) पटः[४४] स्व-गत-रूपादेः’ इति—‘समवायि-कारणम्’ इत्यनुषज्यते ।)

(ii) असमवायि-कारणं लक्ष्यम् । असमवायि-कारणत्वं लक्ष्यताऽवच्छेदकम् । ‘कार्यैकार्थ-कारणैकार्थान्यतर-प्रत्यासत्त्या कार्याधिकरणे[४५] सम्बद्धं सत् कार्य-जनकत्वम्’ असमवायि-कारणस्य [४६]लक्षणम् । (क) पटं प्रति[४७] तन्तुः[४८] समवायि कारणम्;

---

“तादृश-भाव०” इत्यस्ति ।। ३४. स०४कोषेऽत्र “दण्ड-निष्ठ-कार्यता-निरूपित-दण्ड०” इति पाठः ।। ३५. स०२कोषेऽत्र “कारणताऽवच्छे०” इति पाठः ।। ३६. स०१कोषे “०च्छिन्नीभावः” इत्यस्ति ।। ३७. वाक्य-शेषोऽयं स०५कोषे “तद्वत्त्वस्य दण्डे सत्त्वाल्लक्षण-सङ्गतिः ।” इत्यस्ति ।। ३८. पद-कृत्य-वाक्यमिदम् “अन०…मुपात्तम् ।” इति समग्रं स०५कोषे नास्ति ।। ३९ अस्मत्कोषे “मात्रमुक्तौ” इत्यस्ति ।। ४०. वाक्यमिदं स०५कोष एवास्ति ।। ४१. स०५कोष इतः प्राक् “कार्यता-निरूपित-” इत्यधिकम् ।। ४२. स०५ कोषेऽस्य स्थाने “ ‘त्रयो विधाः=प्रकाराः समवायि-कारणत्वासमवायि-कारणत्व-निमित्त-कारणत्व-रूपाः यस्य, तादृशं कारणं त्रि-विधम् ।’ इति फलितोऽर्थः । तत्र स०” इति लभ्यते ।। ४३. स०५कोषेऽस्य वाक्यस्य स्थाने कोष्ठकस्थं लक्षण-स्वरूपं तत्पद-कृत्यादि चोपलभ्यते ।। ४४. कोषे “पट-स्व०” इत्यस्ति ।। ४५. अस्मत्कोषे “कार्याधिकरणेन” इत्यस्ति । [illegible]न्नर्थे=तन्तौ…सम्बद्धं सत्” इति सप्तम्यनुरोधादत्र तृतीया नानुकूला ।। ४६. स०५कोषेऽत्रेतः (‘कार्यैकार्थ०” इति

स्वस्मिन्समवेत-कार्य-जनकत्वात्; तन्तु-संयोगोऽसमवायि-कारणम् स्व-कार्येण=पटेन सह एकस्मिन्नर्थे=तन्तौ समवाय[४९]-सम्बन्धेन [५०]सम्बद्धं सत् पट-जनकत्वस्य सत्त्वात्। (ख) [५१]तन्तु-रूपं पट-रूपस्य—[५२]तन्तु-रूपाधिकरणं=तन्तुः; तस्य कार्यं=पट-रूपम्; तस्याधिकरणं=पटः; अनयोर्व्यधिकरणत्वादव्याप्तिः[५३]; अतः 'कारणैकार्थ-प्रत्यासत्त्या' इत्युक्तम्। एवं च स्वं=पट-रूपं; [५४]स्व-कारणं=पटः; स्व-कारणैन-कस्मिन्नर्थे=तन्तौ समवाय-सम्बन्धेन सम्बद्धस्य[५५] तन्तु-रूपस्य स्व-कार्यं=पट-रूप-जनकत्वान्नाति-[५६] व्याप्तिः। 'कारणैकार्थ[५७]-प्रत्यासत्ति-'मात्रोक्तौ तन्तु-संयोगे-ऽति[५८]व्याप्तिः; अतः 'अन्यतर-'इत्युक्तम्।

(iii) निमित्त-कारणं लक्ष्यम्[५८]। निमित्त-कारणत्वं लक्ष्यतावच्छेदकम्। '(i) समवायि-कारण-भिन्नत्वे सति, (ii) असमवायि-कारण-भिन्नत्वे सति कारणत्वं' लक्षणम्। 'समवायि-कारण-'भिन्नत्वोक्तौ असमवायि-कारणेऽतिव्याप्तिः; अतः 'असमवायि-कारण-भिन्नत्वम्' उक्तम्[५९]। 'असमवायि-कारण-भिन्नत्व-' उक्तौ सम-वायिकारणेऽतिव्याप्तिः; अतः 'समवायि-कारण-भिन्नत्वम्[६०]' उक्तम्। उभय-भिन्न-त्वोक्तौ घटेऽतिव्याप्तिः; अतः 'कारणत्वम्' उक्तम् ॥ ३६ ॥

---

लक्षण-वाक्यात्) प्रारभ्य "सत्त्वात्" इत्यन्तः पाठो भिन्नः—" 'समवाय-सम्बन्धाव-च्छिन्न-कार्यता-निरूपित-समवाय-स्व-समवायि-स (म ?) वायान्यतर-सम्बन्धावच्छिन्न-कारणत्वं।' लक्षणम्। 'यथा (क) तन्तु-संयोग०' इति—पट-रूप-कार्येण सहैकस्मि-न्नर्थे=तन्तौ तन्तु-संयोगस्य समवेतत्वात्। '(ख) तन्तु-रूपं पट-रूपस्य' इति—'असमवायि-कारणम्' इत्यनुषज्यते; रूप-कारणेन=पटेन सहैकस्मिन्नर्थे तन्तु-रूपस्य समवेतत्वात्। अत्र लक्षणे 'समवाय-सम्बन्धावच्छिन्न-कार्यता-निरूपित-सम्बन्धाव-च्छिन्न-कारणता' इत्युक्तौ तन्तु-रूपे† पट-गत-रूपस्यासमवायि-कारणे अव्याप्तिः; अतः 'स्व-समवायि-' इत्युक्तम्"। † कोषे "०रूपं" इत्यस्ति; परं "पट०कारणे" इति विशेष्यानुकूलत्वाद् "रूपे" इति समुचितं प्रतीयते ॥ ४७. अस्मत्कोषे "पटं प्रति" इति स्थाने "पट-तन्तु" इत्यस्ति ॥ ४८. स०३ कोषे एवेदम्; इतरत्र तु "तन्तु" इति क्लीबम् ॥ ४९. स०३कोषे "समवायी०-स०" ॥ ५०. स०२कोषे वाक्य-शेषोऽयं "जनकत्वात्" इति समग्रेपि ॥ ५१. स०५कोषे "तन्तु-रूपस्य" इति प्रागागतचरमपि पुनर्दत्तम् ॥ ५२. स०१कोष इतः प्राक् "तन्तु-रूपस्य" इत्यप्यस्ति ॥ ५३. स० ५: "०दतिव्या०" ॥ ५४. स० ५: "स्व० पटः" नास्ति ॥ ५५. स० २ कोष एवेदम्। अन्यत्र "सम्बद्धं सत्" इत्यस्ति ॥ ५६. स०२कोषे उभयत्र "ति" इति लिखितमपि हरितालिकया लोपितम् ॥ ५७. अस्मत्कोषे "कारणैकार्थ-" इति नास्ति ॥ ५८. स० ४ कोषे वाक्यमिदन्नास्ति ॥ ५९ अस्मत्कोषे " 'असम० भिन्नत्वम्' उक्तम्।" इति नास्ति। स०५कोषे चेदं वाक्य "समवायि-कारणेऽतिव्याप्ति-वारणाय 'समवायि-कारण-भिन्नत्वम्' उक्तम्।" इति समाहारि॥ ६०. स०२कोषे "त्व" नास्ति॥ ३६ ॥

(२.१६ बुद्धि-विवरणे यथार्थानुभव-भेदस्य प्रत्यक्षस्य सकरणस्य लक्षणम्)

**(२.१६ ii. क. अ) तत्र प्रत्यक्ष-ज्ञान-करणं=प्रत्यक्षम् । इन्द्रियार्थ-सन्निकर्ष-जन्यं ज्ञानं=प्रत्यक्षम् । तद् द्वि-विधम्—'(i) निर्विकल्पकं, (ii) सविकल्पकं चे'ति । तत्र (i) निष्प्रकारकं ज्ञानं=निर्विकल्पकम् । यथा[1]—'इदं किञ्चित् ।' इति । (ii) सप्रकारकं ज्ञानं=सविकल्पकम् । यथा—'(अ) डित्थोऽयं, (आ) ब्राह्मणोऽयं, (इ) श्यामोऽयम्[2] ।' इति ॥ ३७ ॥**

(बाल प्रबोधिनी) प्रत्यक्ष-ज्ञान-करणमाह 'तत्र०' इति । 'प्रमाण-चतुष्टय-मध्ये ।' इत्यर्थः । प्रत्यक्ष-ज्ञान-लक्षणमाह 'इन्द्रियार्थ०' इति । अनुमित्यादावतिव्याप्ति-निरासाय 'इन्द्रियार्थ-सन्निकर्ष-जन्यम्' इति । सन्निकर्ष-ध्वंसे तत्परिहाराय 'ज्ञानम्' इति । तद्विभजते 'निर्विकल्पकम्०[3]' इति । निर्विकल्पकं[3] लक्षयति 'तत्र०' इति । 'प्रत्यक्ष-ज्ञाने ।' इत्यर्थः । निष्प्रकारकं=निर्विशेषम् । (i) सविकल्पक-ज्ञाने, (ii) निर्विशेषे इदमर्थे चातिव्याप्ति-निरासकं पद-द्वयमुदाहरति "यथा—'इदं किञ्चित् ।'" इति ।

---

१. इदमुदाहरणं कतिपय-संस्करणेषु नास्ति । कतिषुचन टीकासु चापि अस्मिन्पदे नावधानमदायि । बाल-प्रबोधिन्यामस्य व्याख्या लभ्यते । निरुक्तौ चेदं "किञ्चिदिदम्" इति धृतम् । इत्यतोऽत्रेदमपेक्ष्यत एव ॥ २. वाक्य-वृत्तौ " 'यथा—' इति (i) 'डित्थ'-पद-(ii) ब्राह्मणत्व-जाति-(iii) श्याम-रूप-(iv) पाक-कृतीनां क्रमेण प्रकारत्वं बोध्यम् ।" इति "पाक-कृति-" ग्रहणेन कदाचित् "पाचकोऽयम्" इत्युदाहरणमेव व्याख्यातम् । रामरुद्रेणापि दीपिकाया "नाम-जात्यादि-विशेष्य-विशेषणसम्बन्धावगाहि ज्ञानमित्यर्थः ।" इत्यत्र " 'जात्यादि-' इति—आदिना गुण-क्रिययोः सङ्ग्रहः ।" इति क्रिया-ग्रहणेन 'क्रियोदाहरणमप्यत्र कदाचित्स्यादि'ति सूच्यते । तदेवानुलक्ष्य चास्मिन्प्रसङ्गे वाक्यवृत्ति-युत-तर्कसङ्ग्रह-संस्करणे (पूनातः १८७३ ई० प्रकाशिते), मैलापुरतः प्रकाशित-नव-टीका-युताद्यन्य-कतिपय-संस्करणेषु चात्र "पाचकोऽयम्" इत्युदाहरणं मूले दृश्यते । तद्वयं नोचितं विभावयामः । तथाहि—(१) न्याय-बोधिन्यां प्रथमोदाहरण-द्वयमेव व्याख्यायते, "इदन्त्वावच्छिन्न-विशेष्यता-निरूपित-(i) डित्थत्व-प्रकारता-शालि ज्ञानम्, (ii) ब्राह्मणत्व-प्रकारता-शालि ज्ञानं च सविकल्पकमित्यर्थः ।" इति । इदं च दीपिकोक्त-"नाम-जात्यादि-"गत-नाम-जात्युदाहरणमात्रतया नेयम् । (२) नृसिंह-प्रकाशिकायामुपरि-धृतोदाहरण-त्रयमेव सोद्धरणं व्याख्याय "दीपिकायां 'नाम-जात्यादि' इति 'आदि'ना गुण-परिग्रहः ।" इति क्रिया-ग्रहणमेवात्र नाभिमतम् । (३) निरुक्तावप्येवमेव "तदुदाहरति 'डित्थोऽयम्' इति—इदं ज्ञानं (i) डित्थत्व-प्रकारक-डित्थ-विशेष्यकम्, (ii) ब्राह्मणत्व-प्रकारक-ब्राह्मणत्व-विशेष्यकम्, (iii) श्यामत्व-प्रकारक-श्याम-विशेष्यकं भवति···" इत्युदाहरण-त्रयमेव व्याख्यातम् । (४) उदाहरण-त्रय-दान-मूलं च तर्क-भाषायां (द्र० पृष्ठं ४६ : "नाम-जात्यादि-योजनात्मकं (i) 'डित्थोऽयम्', (ii) 'ब्राह्मणोऽयम्', (iii) 'श्यामोऽयम्' इति विशेषण-विशेष्यावगाहि ज्ञानमुत्पद्यते ।" इति) बोध्यम् ॥ ३. असमत्कोषे "निर्विकल्पम्" इति पाठः ॥

स-विकल्पकं लक्षयति 'स-प्रकारकम्' इति। पद-द्वयेन (i) निर्विकल्पक-ज्ञाने, (ii) सविशेषार्थे चातिव्याप्ति-निरासः। उदाहरति—"यथा—'डित्थोऽयम्।'" इति॥

(उपन्यासः) प्रत्यक्ष-ज्ञानं लक्ष्यम्। प्रत्यक्ष-ज्ञानत्वं लक्ष्यतावच्छेदकम्। 'इन्द्रियार्थ-सन्निकर्ष-जन्यत्वे सति ज्ञानत्वं' लक्षणम्। 'इन्द्रियार्थ-सन्निकर्ष-जन्यत्व-' मात्रोक्तौ[४] सन्निकर्ष-ध्वंसेऽतिव्याप्तिः; अतो 'ज्ञानत्वम्' उक्तम्। 'ज्ञानत्व-' मात्रोक्तौ [५]अनुमितावतिव्याप्तिः; ज्ञानत्वस्य तत्र[६] सत्त्वात्; अतः 'सन्निकर्ष-जन्यत्वम्' उक्तम्। सन्निकर्ष-जन्यत्वस्य [७]तत्राभावान्नातिव्याप्तिः॥ ३७॥

(२.१६ बुद्धि-गुण-विवरणे प्रत्यक्ष-हेतु-सन्निकर्षाणां लक्षणानि)

**(२.१६. ii. क.अ) प्रत्यक्ष-ज्ञान-हेतुरिन्द्रियार्थ-सन्निकर्षः षड्-विधः—'(१) संयोगः, (२) संयुक्त-समवायः, (३) संयुक्त-समवेत-समवायः, (४) समवायः, (५) समवेत-समवायो, (६) विशेषण-विशेष्य-भावश्च।' इति। (१) चक्षुषा घट-प्रत्यक्ष-जनने संयोगः सन्निकर्षः। (२) घट-रूप-प्रत्यक्ष-जनने संयुक्त-समवायः सन्निकर्षः, चक्षुः-संयुक्ते घटे रूपस्य समवायात्। (३) रूप-त्व-सामान्य-प्रत्यक्षे संयुक्त-समवेत-समवायः सन्निकर्षः; चक्षुः-संयुक्ते घटे रूपं समवेतम्, तत्र रूपत्वस्य समवायात्। (४)श्रोत्रेण शब्द-साक्षात्कारे समवायः सन्निकर्षः; कर्ण-विवर-वृत्त्याकाशस्य-श्रोत्रत्वात्, शब्दस्याकाश-गुणत्वाद्, गुण-गुणिनोश्च समवायात्। (५)शब्दत्व-साक्षात्कारे समवेत-समवायः सन्निकर्षः, श्रोत्र-समवेते शब्दे शब्दत्वस्य समवायात्। (६)अभाव-प्रत्यक्षे विशेषण-विशेष्य-भावः सन्निकर्षो, 'घटाभाववद् भूतलम्।' इत्यत्र चक्षुः-संयुक्ते भूतले घटाभावस्य विशेषणत्वात्॥ ३८॥**

(बाल-प्रबोधिनी) प्रत्यक्ष-ज्ञान-हेतु-सन्निकर्षं विभजते 'प्रत्यक्ष०' इति। विभाग उदाहरणैः स्पष्टः, इति न व्याख्यातः॥

(उपन्यासः)[१]'प्रत्यक्ष-ज्ञान-हेतुरिन्द्रियार्थ-सन्निकर्षः षड्-विधः।'[२] इति विभागोक्तिः। (१) विषयता-सम्बन्धेन द्रव्य-विषयक-लौकिक[३]-प्रत्यक्षत्वावच्छिन्नं प्रति [४]संयोगः सन्निकर्षः[५] कारणम्। (२) गुण-कर्म-सामान्य[६]-विषयक-विषयता-सम्बन्धेन

---

४. स०४कोषे "सन्नि०क्तौ" इति नास्ति॥ ५.स०५कोष एवेदम्; इतर-कोषेषु तु "अनुमित्यादाव०" इत्यस्ति॥ ६. स०५कोषे "तत्रापि ज्ञानत्वस्य सत्त्वात्" इति पाठः॥ ७. स०४कोषे "तत्र भावा०" इति, स०५कोषे च "तत्रासत्त्वा०" इति पाठः॥ ३७॥

१. स०३,५कोषयोः "प्रत्यक्ष-ज्ञाने हे०" इति, स०४कोषे च "प्रत्यक्षस्य ज्ञाने हे०" इति पाठः॥ २. अस्मत्कोष-स०१,३कोषेषु "०विधेति०" पाठः; स०४कोषे '०विधोति भोगोक्तिः" इति; स०५कोषे च "विधश्चेति" पाठः॥ ३. स०५कोषे "लौ०त्वा०" स्थाने "चाक्षुषत्वा०" इति; स०३कोषे च "लौ०क्षताव०" इति पाठः॥ ४. अस्मत्कोषे "सं" नास्ति; स०१-३कोषेषु "संयोग स०" इति वर्तते॥ ५. स०४कोषे उभयोः पदयोर्मध्ये "प्रत्यक्षोपन्यासः" इति तावदस्थाने-पतितमस्ति। अस्य वास्तविकं

लौकिक-प्रत्यक्षत्वावच्छिन्नं प्रति संयुक्त-समवायः[७] सन्निकर्षः कारणम् । (३) [८]गुणत्व-कर्मत्व-विषयक-विषयता-सम्बन्धावच्छिन्न-[९]लौकिक-प्रत्यक्षत्वावच्छिन्नं प्रति संयुक्त-समवेत-समवायः[१०] सन्निकर्षः कारणम् । (४) [११]शब्द-विषयक-विषयता-सम्बन्धावच्छिन्न-लौकिक-प्रत्यक्षत्वावच्छिन्नं प्रति समवायः[१२] सन्निकर्षः कारणम् ।[१३] (५) शब्दत्व-विषयक-विषयता-सम्बन्धावच्छिन्न-लौकिक-प्रत्यक्षत्वावच्छिन्नं प्रति समवेत-समवायः[१२] सन्निकर्षः कारणम् । (६) [१४]अभाव-विषयक-विषयता-सम्बन्धावच्छिन्न-लौकिक-प्रत्यक्षत्वावच्छिन्नं प्रति विशेषण-विशेष्य-भावः सन्निकर्षः[१५] कारणम् ॥३८॥

(इन्द्रियं प्रत्यक्ष-प्रमाणम्)

**(२.१६.ii. क.अ) एवं सन्निकर्ष-षट्क-जन्यं ज्ञानं प्रत्यक्षम् । तत्करण-मिन्द्रियम् । तस्मादिन्द्रियं=प्रत्यक्ष-प्रमाणम्, इति सिद्धम् ॥ ३९ ॥**

**॥ इति प्रत्यक्ष-परिच्छेदः[१] ॥**

(बाल-प्रबोधिनी) प्रत्यक्ष-ज्ञानं, तत्करणं चोपसंहरति 'एवम्' इत्यादि ॥

॥ प्रत्यक्षाख्यानं समाप्तम् ॥

(उपन्यासः) [२]करणं=चक्षुरादिकम् इति बोध्यम् ॥

॥ इति प्रत्यक्षोपन्यासः[३] ॥ ३९ ॥

(२.१६ बुद्धि-विवरणे यथार्थानुभव-द्वितीय-भेदस्यानुमितेः सकरणस्य लक्षणम्)

**(२.१६.ii.क.आ) अनुमिति-करणम्=अनुमानम् । परामर्श-जन्यं ज्ञानम्=अनुमितिः । व्याप्ति-विशिष्ट-पक्ष-धर्मता-ज्ञानं=परामर्शः । यथा—'वह्नि-व्याप्य-धूमवानयं पर्वतः ।' इति ज्ञानम् परामर्शः[१]; तज्जन्यं 'पर्वतो वह्निमान् ।' इति ज्ञानमनुमितिः । [२]'यत्र धूमस्, तत्राग्निः ।' इति साहचर्य-**

---

स्यानमनुवर्तिनोऽनुच्छेदस्यान्तेऽस्ति, यत्रायमस्मिन्कोषे नास्ति ॥ ६. अस्मत्कोषे "०न्यानां विषयता-स०" इति पाठः ॥ ७. अस्मदीय-स०२-४कोषेषु "०वाय-स०" इति ॥ ८. स०३कोषे (३-४) सन्निकर्षयोर्विवरणं नास्ति । स०४कोषे च "गुणत्व-" इति नास्ति ॥ ९. अस्मत्कोषे इतः प्रभृति (५)"शब्दत्व०च्छिन्न-" इति ग्रन्थो नास्ति ॥ १०. स०२,४ कोषयोः "०य-स०" इति पाठः ॥ ११. स०४कोषेऽस्य सन्निकर्षस्य विवरणं नास्ति ॥ १२. स०५कोषादन्येषु कोषेषु "०य-स०" इति पाठः ॥ १३. स०२ कोषे इदं विवरणं "शब्द-विषयकता-स०" इत्यादि-रूपेण पुनर्लिखितं वर्तते ॥ १४. स०४ : "भाव०" ॥ १५. स०५ कोषे विसर्गो नास्ति ॥ ३८ ॥

१. बोडास: संस्करणे नेदम् ॥ २. स०५ कोषे "कारणं" इति पाठः ॥ ३. स०४ कोष इदं नास्ति । द्र० गतानुच्छेदे टि०५ ॥ ३९ ॥

१. केषुचित्कोषेष्वत्र "परामर्श" इति नास्ति इति बोडाः । पट्टाभिरामेण तूद्धृतमिदम् । "यथा" इत्यस्य सम्बन्धो यदि परामर्शोदाहरण-दान-मात्रेणास्ति, तदा तु "परा०" इत्यत्र नावश्यकम्; परं यदि "तज्जन्यम्..." [illegible]नुमित्युदाहरण-दानेनाप्यस्ति, तदाऽऽवश्यकं प्रतिभाति ॥ २. श्रीशास्त्रिगल्संस्करण-दीपिका-वाक्य वृत्ति-निरुक्ति-

**नियमो = व्याप्तिः । व्याप्यस्य पर्वतादि-वृत्तित्वं = पक्ष-धर्मता ।। ४० ।।**

(बाल-प्रबोधिनी) अनुमानं लक्षयति 'अनुमिति०' इति । करण-मात्रेऽनुमिति-ज्ञाने चातिव्याप्ति-वारणाय 'अनुमिति-करणम्' इत्युक्तम् ।। अनुमिति-ज्ञानं लक्षयति 'परामर्श०' इति । प्रत्यक्षादि-ज्ञाने परामर्श-ध्वंसे चातिव्याप्ति-वारणाय पद-द्वयम् ।। परामर्शं लक्षयति 'व्याप्ति-विशिष्ट०' इति । व्याप्ति विशिष्टं = व्याप्यं = लिङ्गम्; तस्य हेतुः[3] पक्ष-धर्मता-ज्ञानं = पक्ष-वर्तमानत्व-ज्ञानम् । 'साध्येन व्याप्यो हेतुः पक्षे वर्तते ।' एवं-रूपः परामर्शः । परामर्शमुदाहरति "यथा—'वह्नि०' " इति—'वह्नि-रूप-साध्य-व्याप्य-धूमो = हेतुः पर्वते ।' इत्यर्थः ।। सोदाहरणं[4] व्याप्ति-लक्षणमाह 'यत्र-यत्र०' इति । 'यत्र-यत्र०' इत्याद्युदाहरणम् । व्याप्य-व्यापकयोः साहचर्य-नियमो' लक्षणम् ।। पक्ष-धर्मता-लक्षणमाह 'व्याप्यस्य०' इति । 'पर्वतादि-वृत्तित्वं = पक्ष-वृत्तित्वम्" इत्यर्थः । 'पर्वतादि०[5]' इति धूमादेः पर्वतादि-वृत्तित्वमुदाहरणं सूचितम् ।।

(उपन्यासः) अनुमानं लक्ष्यम् । अनुमानत्वं लक्ष्यताऽवच्छेदकम् । 'अनुमिति-करणत्वं' लक्षणम् । 'करणत्व'-मात्रोक्तौ कुठारेऽतिव्याप्तिः, तत्रच्छेदन-करणत्वस्य सत्त्वात्; अतो '[6]मिति-करणत्वम्' उक्तम् । '[7]मिति-करणत्व'-मात्रोक्तौ चक्षुरा-दावतिव्याप्तिः; मितिर् = ज्ञानम्; तत्करणत्वस्य[8] तत्र सत्त्वात्; अतः 'अनुमिति-करणत्वम्' उक्तम् । 'अनु = पश्चात् + मिति[9] = अनुमितिः; तत्करणम् = अनुमिति-करणम्[10]' इति व्युत्पत्त्या पश्चाज्ज्ञान-करणत्वस्य[11] चक्षुरादौ सत्त्वादति[12]व्याप्ति-स्तदवस्थयैव[13]; अतः 'अनुमितित्व[14]-रूप-जात्यवच्छिन्न-कार्यता-निरूपित-[15] कारणता-शालित्वम् = अनुमानम्[16] ।' इति ध्येयम्[17] ।।

अनुमितिर्लक्ष्या । अनुमितित्वं लक्ष्यताऽवच्छेदकम् । 'परामर्श-जन्यत्वे सति ज्ञान-त्वं' लक्षणम् । 'परामर्श-जन्यत्व'स्य तत्र[18] सत्त्वात् । अतो 'ज्ञानत्वम्' उक्तम्[19] । 'ज्ञानत्व'- मात्रोक्तौ प्रत्यक्ष-ज्ञानेऽतिव्याप्तिः, ज्ञानत्वस्य तत्र सत्त्वात्; अतः 'परामर्श-

---

-पट्टाभिराम टिप्पणीषु च "यत्र", "तत्र" इति पदे सकृदेव पठिते । न्याय-बोधिन्यां, बाल-प्रबोधिन्यां तु वीप्सैवोदाहृता, धृता, व्याख्याता च । बोडास्कुप्पूस्वामि-संस्करणयो-रपि वीप्सा-युत एव पाठः ।। ३. अस्मत्कोषे नास्तीदम् । स०कोषेऽपि काक-पदं दत्त्वा पत्रोपरि "हेतु" इत्यस्ति ।। ४. अस्मत्कोषे "सोदाहरण-व्या०" इत्यस्ति ।। ५. अस्म-त्कोषे "पर्वतादिति धूमोदेः" इति पाठः ।। ६. अस्मत्कोषे "अनुमि०" इति पाठः ।। ७. अस्मत्कोष इतः प्राक् "अनुज्ञानत्व" इत्यधिकम् । स०४ कोषे "अनु० करण-मा०" इति पाठः ।। ८. अस्मत्कोषे "स्य तत्र" इति नास्ति ।। ९. अस्मत्स०२कोषयोरेवेदम् ।। १०. स०२-३ कोषयोः "अनु० करणम्" इति नास्ति ।। ११. स०४ कोषे "ज्ञान-त्वस्य" ।। १२. स०१कोषे "व्याप्ति" इति नास्ति ।। १३. स०५:"स्तदवस्थैव" इति । अस्मत्कोषे "स्तदव यै चतो अनु०" इत्यस्ति ।। १४. स०१ कोषे "०ति-स्वरू०" इत्यस्ति ।। १५. स०४कोषे "०पितः" ।। १६. स०२कोषे "नुमितिरिति" इत्यस्ति ।। १७. अस्मदीय-स०१कोषयोः "बोध्यम्" ।। १८. अस्मत्कोषे नास्तीदम् । स०२कोषे

जन्यत्वम्' उक्तम् । 'स्थाणुर्वा, पुरुषो वा ?' इति[२०]संशयानन्तरं 'स्थाणुत्व-व्याप्य-वक्र-कोटरादिमान् ।' इति परामर्शानन्तरं [२१]जायमाने 'अयं स्थाणुः ।' इति प्रत्यक्षेऽति-व्याप्तिः, परामर्श-जन्यत्वे सति ज्ञानत्वस्य तत्र सत्त्वात्; अतः 'अनुमितित्वं' निवेश्यम्; तत्रानुमितित्वाभावान्नातिव्याप्तिः; तत्र तत्सत्त्वे प्रमाणाभावात्; अनुमितौ तत्सत्त्वे तु 'अनुमिनोमि ।' इत्याकारकानुव्यवसाय एव मानम् ॥

परामर्शो लक्ष्यः । परामर्शत्वं लक्ष्यतावच्छेदकम् । 'व्याप्ति-विशिष्ट-पक्ष-धर्मता-ज्ञानत्वं' लक्षणम् । 'व्याप्ति-विशिष्टत्व'-मात्रोक्तौ 'धूमो वह्नि-व्याप्य' इत्याकारक-ज्ञानेऽतिव्याप्तिः, तत्र व्याप्ति[२२]-विशिष्ट-ज्ञानत्वस्य सत्त्वाद्; अतः 'पक्ष-धर्मताकत्वम्' उक्तम् । 'पक्ष-धर्मताकत्व-'मात्रोक्तौ 'धूमवान्पर्वत' इत्याकारक-ज्ञानेऽति-व्याप्तिः, तत्र पक्ष-धर्मकताकत्वस्य सत्त्वात्; अतो 'व्याप्ति विशिष्टत्वम्' उक्तम् । [२३]'ज्ञानत्व-'मात्रोक्तावनुमितावतिव्याप्तिः; अतो 'व्याप्ति-विशिष्ट-पक्ष धर्मकताकत्व'-मुक्तम्; तत्र व्याप्ति-विशिष्ट-पक्ष-धर्मकताकत्वाभावान्नातिव्याप्तिः । 'वह्नि-व्याप्य-धूमवानयं[२४] पर्वतो वह्निमान्[२५]' इत्याकारका[२६]नुमितावतिव्याप्तिः, व्याप्ति-विशिष्ट-पक्ष-धर्मता[२७]-ज्ञानत्वस्य सत्त्वात्; अतः 'परामर्शत्वम्' [२८]निवेश्यम्; परामर्शत्वस्य तत्राभावान्नातिव्याप्तिः । परामर्शत्वं[२९] जाति-विशेषः । तत्प्रमाणं तु 'परामर्शयामि' इत्याकारका[३०]नुव्यवसाय[३१] एव ॥

पक्ष-धर्मता-ज्ञानं लक्ष्यम् । पक्ष-धर्मता-ज्ञानत्वं लक्ष्यतावच्छेदकम् । 'धूम-प्रकारक-पक्ष[३२]-विशेष्यकत्वं' लक्षणम् । 'धूम-प्रकारकत्व-'मात्रोक्तौ 'धूमवान्महानसः[३१]' इत्याकारक-ज्ञानेऽतिव्याप्तिः, धूम-प्रकारकत्वस्य तत्र[३३] सत्त्वात्; अतः 'पक्ष-विशेष्यक-त्वम्' उक्तम्; महानसस्य पक्षत्वाभावान्नातिव्याप्तिः । 'पक्ष-विशेष्यकत्व-'मात्रोक्ता-वनुमितावतिव्याप्तिः; अतो 'धूम-प्रकारकत्वम्' उक्तम्; [३४]तत्र धूम[३५]-प्रकारक[३६]-

---

"तत्रापि" इत्यस्ति ॥ १९. अस्मत्कोषे नास्ति ॥ २०. अस्मत्कोषे "इत्यादि" इत्यस्ति ॥ २१. स०१-२, ४ कोषेषु "ज्ञायमान" इति, स०३ "जायमाने" इति, स०५ कोषे च "जायमानम्" इत्यस्ति ॥ २२. स०४ कोषे "व्याप्तिः" इत्यस्ति । अस्मत्कोषे "विशिष्ट-" इति नास्ति ॥ २३. अस्मत्कोषे "ज्ञानत्व मात्रो० ताकत्वमुक्तम् ।" इत्यंशो नास्ति ॥ २४. "अयम्" इति स०१,५कोषयोरेवास्ति ॥ २५. स०२ कोषे इतोऽग्रे काक-पदं दत्त्वाऽधस्तन-पार्श्वे "वह्नि-व्याप्यमान्" इत्यधिकम् ॥ २६ स०४ कोषे "०रिका०" ॥ २७. स०५ कोषे "पक्षता-ज्ञा०" इत्यस्ति ॥ २८. स०४ कोषेऽत्र "तु जातिः" इत्यस्थाने ॥ २९. अस्मदीय-स०२-३ कोषेष्वत्र "तु" इत्यधिकम्; स०४ कोषे च "तु जाति०" इति पाठः ॥ ३०. स०१,३-५ कोषेषु "कारक अनु०" इति, स०२ कोषे च "कारकोऽनु०" इति वर्तते ॥ ३१. स०४ कोषे "वसाय" इत्यतः प्रारभ्याग्रिमानुच्छेद-वर्ती "धूमवान्महा" इत्यन्तो ग्रन्थो नास्ति ॥ ३२. स०५ कोषे "पर्वत-" इत्यस्ति, परमग्रे [illegible] इत्यधिकमस्ति ॥ ३३. स०३-४ कोषयोः "तत्र" नास्ति ॥ ३४. अस्मदीय-स०१-४ कोषेषु "तत्र" इति-स्थाने "अत्र" इत्यस्ति ॥ ३५.

त्वाभावान्नातिव्याप्तिः ।।

व्याप्तिर्लक्ष्या । व्याप्तित्वं लक्ष्यताऽवच्छेदकम् । 'साह-चर्य-नियमत्वं[३७]' लक्षणम् । साहचर्यं=सामानाधिकरण्यम् । नियमश्च=हेतु-समानाधिकरणात्यन्ताभाव-प्रतियोगिताऽनवच्छेदक-धर्मवत्त्वम्[३८] । एवं च 'हेतुर्=धूमः; तत्समानाधिकरणो[३९]योऽत्यन्ताभावः—नहि वह्न्यत्यन्ताभावः, अपि तु घटात्यन्ताभावः—तादृशा-भाव-प्रतियोगी घटः, प्रतियोगिताऽवच्छेदकं=[४०]घटत्वम्, अनवच्छेदकं=वह्नित्वम्, तद-वच्छिन्न-सामानाधिकरण्यं धूमेऽस्ति ।' इति लक्षण-समन्वयः ।

'नास्ति च धूमवान् वह्नेः ।' इत्यत्र 'हेत्वधिकरणम्=अयो-गोलकम्, तद्वृत्ति-र्योऽत्यन्ताभावो=धूमात्यन्ताभावः,[४१] तत्प्रतियोगिताऽवच्छेदकमेव=साध्यताऽवच्छेद-कीभूतं[४२] धूमत्वम्[४३]' इति नातिव्याप्तिः । अत्र साध्यताऽवच्छेदके[४४] 'प्रतियोगिता-ऽनवच्छेदकत्व-[४५]' अनुपादाने 'वह्निमान्धूमात्[४६]' इत्यत्र हेत्वधिकरणं=पर्वतः, तद्-वृत्तिः 'एक-[४७]सत्त्वेऽपि द्वयं नास्ति[४८] ।' इति रीत्या वह्नि-घटोभयात्यन्ताभावः[४९], तस्य प्रतियोगी=वह्निः[५०] साध्यम्, अप्रतियोगि न[५१] भवति ।' इत्यव्याप्तिः; अतस्त-दुपादाने च 'हेत्वधिकरणं=पर्वतः, तद्वृत्तिर्=विद्यमानो योऽत्यन्ताभावो[५२]=वह्नि-घटोभयात्यन्ताभावः, तत्प्रतियोगि=उभयम्[५३], प्रतियोगिताऽवच्छेदकम्=उभयत्वम्, अनवच्छेदकं=साध्यताऽवच्छेदकं[५४] वह्नित्वं भवति ।' इति नाव्याप्तिः[५५] । हेत्वधि-करणं=धूमावयवः, तद्वृत्तिर्योऽत्यन्ताभावः[५६], स साध्यताऽवच्छेदक-सम्बन्धेन वह्न्यत्यन्ताभावः, [५७]तादृशाभाव-प्रतियोगिताऽवच्छेदकमेव=साध्यताऽवच्छेदकम् ।'

---

स०३ : "धूमः प्र०" । स०२कोषे "धूम-" इत्यतोऽग्रे " 'द्रव्यं' गुण-कर्मान्यत्व-विशिष्ट-सत्तात्वाद्' इत्यत्र वि" (पृष्ठम् ४४ पङ्क्तिः ५) इतियावत्पाठ-युक्तं पत्रमेकं (२३ सङ्ख्यकं) नास्ति ।। ३६. स०३ कोषे "०कत्वाकेभा०"इति ।। ३७. स०१-२, ४-५ कोषेषु "व्यमवत्त्वं" पाठः ।। ३८. अस्मत्कोषे "धर्म" नास्ति; स०३-४ कोषयोश्च "व" नास्ति ।। ३९. स०३ कोषे "यो" नास्ति ।। ४०. स०४ कोषे "घट० दकम्" इति नास्ति ।। ४१. अस्मत्कोषे "धू० वः" नास्ति ।। ४२. स०५ कोषे "०छेदकं धू०" इत्यस्ति ।। ४३. अस्मत्कोषे "धूमवत्त्व०" इत्यस्ति ।। ४४. अस्मत्कोषे "०छे-दकं" इत्यस्ति ।। ४५. अस्मत्कोषे "०ताऽवच्छे०" इत्यस्ति ।। ४६. अस्मत्कोषे "धूम-वान्" इत्यस्ति । स०५ कोषे "त्र" इति नास्ति ।। ४७. अस्मत्कोषे "एकत्वे" इत्यस्ति । स०५ कोषे "ऽपि" नास्ति ।। ४८. अस्मत्कोषे "नानीतिरित्या" इत्यस्ति । स०५ कोषे "०स्तीति प्रतीत्या" इत्यस्ति ।। ४९. स० कोषेषु "०भयाभावः" इत्यस्ति ।। ५०. स० कोषेषु "०योग्येव सा०" इति ।। ५१. अस्मत्कोषे "न० तत्प्रतियोगि" इति नास्ति ।। ५२. "विद्य० भावो" इति स०५ कोष एव ।। ५३. स०५ कोषे "प्रति० उभयम्" इति नास्ति । अस्मत्कोषे च "तूभय-प्रति०" इत्यस्ति । द्र० टिप्पणी ५१ ।। "वह्नित्वं" स०५ कोष एवास्ति ।। ५४. अस्मत्कोषे "साध्य० छेदकम्" इति नास्ति । ५६. स०३ कोषे "स" नास्ति । अस्मत्कोषे ५५. अस्मत्कोषे "नातिव्या०" इत्यस्ति ।।

इति [५८]अव्याप्तिः। अतो 'हेतुताऽवच्छेदक-'सम्बन्धेन हेत्वधिकरणं बोध्यम्। एवं च 'हेतुताऽवच्छेदकी-भूत-संयोग-सम्बन्धेन हेत्वधिकरणं=पर्वतः—न तु धूमावयवः—तद्-वृत्तिर्[५९]=घटात्यन्ताभावः, तस्य प्रतियोगिताऽवच्छेदकं[६०]=घटत्वम्, अनवच्छेदकं =साध्यताऽवच्छेदकं[६१] वह्नित्वम्।' इति नातिव्याप्तिः[६२]।

'द्रव्यं[६३] गुण-कर्मान्यत्व-विशिष्ट-सत्तात्वात्।' इत्यत्र 'विशिष्ट-सत्तायाः शुद्ध-सत्तायाश्चैक्याद्धेतुत्वा[६४]वच्छेदकी-भूत-समवाय-सम्बन्धेन हेत्वधिकरणं=गुणः, तद्वृ-त्तिर्=द्रव्यत्वात्यन्ताभावः, तस्य[६५]प्रतियोगिताऽवच्छेदकमेव साध्यताऽवच्छेदकं द्रव्य-त्वम्[६६]।' इत्यव्याप्तिः;[६७] अतो हेतुताऽवच्छेदकावच्छिन्न-हेत्व[६८]धिकरणं बोध्यम्; एवं[६९] च 'हेतुताऽवच्छेदकी-भूत-विशिष्ट-सत्तात्वावच्छिन्न-[७०]विशिष्ट-हेतुताऽवच्छेदक-समवाय-सम्बन्धावच्छिन्न-विशिष्ट-सत्ता[७१]-रूप-हेत्वधिकरणं=द्रव्यमेव—न तु गुणः—[७२]तद्वृत्तिर्=गुणत्वात्यन्ताभावः, [७३]तत्प्रतियोगिताऽवच्छेदकं=गुणत्वम्[७४], अनवच्छेदकं =द्रव्यत्वम्[७५]।' इति नाव्याप्तिः[७६]। एवं च 'हेतुताऽवच्छेदकीभूत[७७]-संयोग-सम्बन्धावच्छिन्न-हेतुताऽवच्छेदकीभूत-धूमत्वावच्छिन्न-धूम-रूप-हेत्वधिकरणं = पर्वतः, तद्वृत्तिः[७८] समवाय-सम्बन्धेन=वह्न्यत्यन्ताभावः, तस्य प्रतियोगिताऽवच्छेदक-मेव[७९]=साध्यताऽवच्छेदक-वह्नित्वम्।' इत्यव्याप्तिः; अतो हेत्वधिकरण-वृत्त्यभावे साध्यताऽवच्छेदक-[८०]सम्बन्धावच्छिन्न-प्रतियोगिताकत्वं बोध्यम्; तथा[८१] च 'हेतुताऽ-

---

"भाव-सा०" इत्यस्ति॥ ५७. स०१ कोषे "तादृशी भा०" इत्यस्ति॥ ५८. स०१ कोषे "ति व्याप्तिः" इत्यस्ति॥ ५९. अस्मत्कोषे "वृत्ति-घ०" इति॥ ६०. अस्म-त्कोषे "०दक-घ०" इत्यस्ति॥ ६१. स०५ कोषे "सा० दकं" नास्ति॥ ६२. स०५ कोषे "नाव्याप्तिः" इत्यस्ति॥ ६३. अस्मत्कोषे "द्रव्य" इत्यस्ति। स० कोषेषु च "द्रव्यं० सत्त्वात्" इत्यस्ति॥ ६४. स०२कोषे "०क्या हेतुता०" इति, स०३कोषे च "०क्याद्धेतुता०" इत्यस्ति॥ ६५. स०५ कोषे "तत्प्र०" इति॥ ६६. स० १कोषे "द्रव्यत्वत्वम्" इत्यस्ति॥ ६७. अस्मत्कोषे "इत्यतिव्याप्तिः" इत्यस्ति॥ ६८. स० १कोषे "हेतुत्वा०" इति, स०३कोषे च "०न्नत्व-हेत्व०" इत्यस्ति॥ ६९. अस्मत्कोषे "एवं० करणं" ग्रन्थो "हेतुताऽवच्छिन्न-हेत्वधिकरणं च" इति रूपेणास्ति॥ ७०. स० २-४ कोषेषु "विशिष्ट"- इति नास्ति॥ ७१. स०५कोषे "सत्ता" नास्ति। स०१कोषे "सत्ता-रूप-हेतु-रूप-हेत्व०" इत्यस्ति॥ ७२. "तद्वृत्ति गुण०" इति स० ४कोषे॥ ७३. स० १-४ कोषेषु 'तत्" इति नास्ति॥ ७४. अस्मत्कोषे, स०१कोषे च 'गुण० छेदकं" नास्ति; स० २-३, ५ कोषेषु "गुणत्वत्वम्०" इति वर्तते॥ ७५. अस्मदीय-स० ३, ५ कोषेषु "द्रव्यत्वत्वम्" इत्यस्ति॥ ७६. अस्मत्कोषे "नाति-व्याप्तिः" इत्यस्ति॥ ७७. स०५कोषे "छेदक-सम्ब०" इत्यस्ति, "कीभूत-संयोग-" इति नास्ति॥ ७८. अस्मत्कोषे "तद्वृत्तिः सम" इति स्थाने "सव्य-" इत्यस्ति॥ ७९. स०४कोषे "०मेव साध्यताऽवच्छेदकमेव" इत्यस्ति॥ ८०. स० १ कोषे "सम्बद्धा" इत्यस्ति॥ ८१. स०५कोषे "तेन हेतुताऽवच्छेदकी०" इत्यस्ति॥

वच्छेदक-सम्बन्धेन हेतुताऽवच्छेदकी-भूत-धूमत्वावच्छिन्न-धूमाधिकरण-पर्वत-वृत्तिः[८२], साध्यताऽवच्छेदकी-भूत-संयोग-सम्बन्धावच्छिन्न-प्रतियोगिताको[८३] =घटात्यन्ताभावः—नहि[८४] वह्न्यत्यन्ताभावः, संयोग-सम्बन्धेन वह्नेः सत्त्वात्—तत्प्रतियोगिताऽवच्छेदकं =घटत्वम्, अनवच्छेदकं=साध्यताऽवच्छेदकं वह्नित्वम्।', इति नाव्याप्तिः[८५]।

एवं[८६] 'विशिष्ट-सत्तावान्, जातेः।' इत्यत्र[८७] 'हेतुताऽवच्छेदकीभूत-समवाय-सम्बन्धावच्छिन्न-हेतुताऽवच्छेदक-जातित्वावच्छिन्न-जाति-रूप-हेत्वधिकरण=गुणः[८८], तद्वृत्तिः = साध्यताऽवच्छेदकीभूत समवाय-सम्बन्धावच्छिन्न-प्रतियोगिताकाभावः[८९]—नहि विशिष्ट-सत्तात्वावच्छिन्न-प्रतियोगिताकाभावः[९०], विशिष्ट-सत्तायाः[९१] शुद्ध-सत्तायाश्चैक्यात्, अपितु [९२]द्रव्यत्वात्यन्ताभावः—तस्य[९३] प्रतियोगिताऽवच्छेदकं द्रव्यत्वत्वम्, अनवच्छेदकं=विशिष्ट-सत्तात्वम्।' इत्यतिव्याप्तिः; अतः 'प्रतियोगिताऽवच्छेदकावच्छिन्न-प्रतियोगिताकत्वं'[९४] हेत्वधिकरण-वृत्त्यभावे विशेषणं[९५] देयम्; तथा च हेतुताऽवच्छेदक-समवाय-सम्बन्धावच्छिन्न[९६]-हेतुताऽवच्छेदक-जातित्वावच्छिन्न-जाति-रूप-हेत्वधिकरण-गुण-वृत्तिः साध्यतावच्छेदक-सम्बन्धावच्छिन्न-प्रतियोगिताऽवच्छेदक-विशिष्ट-सत्तात्वावच्छिन्न-[९७]प्रतियोगिताक[९८]-विशिष्ट-सत्ताभावः; तत्प्रतियोगिताऽवच्छेदकमेव=साध्यताऽवच्छेदकम्[९९]; अनवच्छेदकं न[१००] भवति; इति नातिव्याप्तिः[१०१]।

अभावे 'हेत्वधिकरण-वृत्तित्वं' च='दैशिक-विशेषणता-सम्बन्धेन' बोध्यम्। अन्यथा 'वह्निमान्धूमाद्' इत्यत्र हेत्वधिकरण=पर्वते साध्यताऽवच्छेदक-संयोग-सम्बन्धावच्छिन्न-साध्यताऽवच्छेदक-वह्नित्वावच्छिन्न-प्रतियोगिताको=वह्न्यत्यन्ताभावो वह्नि-शून्य-देशे विद्यमानः, तस्यैव कालिक-सम्बन्धेन सत्त्वात्तत्प्रतियोगिताऽवच्छेदकं

---

८२. अस्मत्कोषे "वृत्ति-सा०" इत्यस्ति॥ ८३. स० ५ कोषे इतः प्रारभ्य "सत्त्वात्, तत्"इत्यन्तो ग्रन्थ एवं वर्तते—"०योगिताकाभाव-प्रति०"। अल्पः पाठश्च पुनरुक्तः॥ ८४. अस्मत्कोषे "नहि० भावः" इति नास्ति॥ ८५. अस्मत्कोषे "नातिव्याप्तिः" इत्यस्ति॥ ८६. अस्मदीय-स०५: "एवं च"॥ ८७. स० १,३-४ कोषेष्वत्र "जाति-रूप-हेत्वधिकरणं" इति, स०५कोषे च "जाति० करण" इत्यधिकम्॥ ८८. अस्मत्कोषे "०रण-गुण-गुणः", स०५कोषे च "गुतः" इत्यस्ति॥ ८९. अस्मकोषे "०ताकः" इति, स० ५ कोषे च "०ताको येभावः" इत्यस्ति॥ ९० स०५कोष एवेदम्। इतर-कोषेषु तु "विशिष्ट-सत्ताऽत्यन्ताभावः" इत्यस्ति॥ ९१. अस्मत्कोषे "त्ता-शु०" इति, स० १ कोषे च "त्तायाः०त्ताश्चै०"॥ ९२. अस्मत्कोषे "द्रव्यता०"॥ ९३. स० ५: "तत्प्र०"॥ ९४. स०३कोषे "०गित्वं' इति, स०५कोषे "०गिकत्वं" इत्यस्ति॥ ९५. स० ४: "विशिष्ट-शेषणम्"॥ ९६. स० ४: "०न्नता"॥ ९७. स० ४: "०सप्तात्वा०"॥ ९८. स०५कोषे "०गिताऽवच्छेदक-विशिष्ट-सत्तात्वावच्छिन्न-प्रतियोगिताक-वि०" इति। ९९. स० ५: 'विशिष्ट-सत्तात्वम्" इत्यधिकम्॥ १००. स०१: "न व" इत्यस्ति। स०५कोषे "अनव० भवति" इति वाक्यं नास्ति॥ १०१.

वह्नित्वं[१०२]=साध्यताऽवच्छेदकम्, अनवच्छेदकं न भवति ।' इत्यव्याप्तिः; तन्निवेशे च धूमाधिकरण=पर्वत-वृत्तिदैशिक-विशेषणता-सम्बन्धेन[१०३]संयोग-सम्बन्धावच्छिन्न घटत्वावच्छिन्न-प्रतियोगिताको=घटात्यन्ताभाव एव[१०४]—नहि वह्न्यत्यन्ताभावः, तेन सम्बन्धेन तस्य विरोधात्[१०५]—तत्प्रतियोगिता[१०६]ऽनवच्छेदकं [१०७]साध्यताऽवच्छेदकं भवति ।' इति नाव्याप्तिः ।

साध्यताऽवच्छेदके[१०८] प्रतियोगिता[१०९]ऽनवच्छेदकत्वं 'साध्यताऽवच्छेदकता-घटक-सम्बन्धेन' बोध्यम् । अन्यथा धूमाधिकरण=पर्वत वृत्ति=घटात्यन्ताभाव-प्रतियोगितायां कालिकादि[११०]-सम्बन्धेन साध्यताऽवच्छेदकीभूत-[१११]वह्नित्वस्यावच्छेदकत्वादव्याप्तिः[११२] । तन्निवेशे च[११३] धूमाधिकरण=पर्वत-वृत्ति=घटात्यन्ताभाव-[११४]प्रतियोगितायां साध्यताऽवच्छेदकता[११५]-घटक-समवाय-सम्बन्धेन [११६]वह्नित्वस्यानवच्छेदक[११७]त्वान्नाव्याप्तिः[११८] ।

एवं[११९] 'धूमवान्[१२०] वह्नेः ।' इत्यत्र हेतुताऽवच्छेदक-संयोग-सम्बन्धावच्छिन्न-हेतुताऽवच्छेदक-वह्नित्वावच्छिन्न-वह्नि-रूप हेत्वधिकरणायो-गोलक-वृत्ति[१२१]-घटात्यन्ताभाव[१२२]-प्रतियोगितायां साध्यताऽवच्छेदकता-घटक-समवाय[१२३]-सम्बन्धेनानवच्छेदकं यद् धूमवत्त्वं[१२४], कालिक-सम्बन्धेन तदवच्छिन्नस्यायो[१२५]-गोलकीय-रूपादि-सामानाधिकरण्यस्य[१२६] वह्नौ सत्त्वादतिव्याप्तिः, इति[१२७] 'तदवच्छिन्नत्वम्' अपि

---

स०४ : "नाव्याप्तिः" ॥ १०२. अस्मत्कोषे "इति" अप्यस्ति ॥ १०३. स०५कोषे "सम्बन्धेन-संयोग-" इति नास्ति ॥ १०४. अस्मत्कोषे "एव" नास्ति ॥ १०५. अस्मत्कोषेऽत्र "तत्प्रतियोगिताऽवच्छेदक-घटात्यन्ताभावः" इत्यधिकम् ॥ १०६. अस्मत्कोषे "०गितावच्छे०" इत्यस्ति ॥ १०७. स० २, ४ कोषयोः "सा० कम्" इति नास्ति । अस्मत्कोषे तु इदं, "न" इत्यधिकं चास्ति ॥ १०८. स० ४ : "०दकरूप्र०" ॥ १०९. अस्मत्कोषे "०ताऽव०" ॥ ११०. अस्मत्कोषे 'कालिक-स०", स० २कोषे "कालिकालि-स०" ॥ १११. स० ३ कोषे "वह्निवत्त्व०" इत्यस्ति । स०२कोषे "मत्त्व०" इति लिखितेऽपि 'म" हरितालिकया लिप्तः । स०५ : "वह्नित्वस्याप्यव०" इति पाठः ॥ ११२. अस्मत्कोषे "०दतिव्याप्तिः" इति पाठः ॥ ११३. स०२ कोषे "न" इति नास्ति ॥ ११४. अस्मदीय-स०१कोषयोः "०भावः प्र०" ॥ ११५. स०४ कोषे "०ध्यता-घट०" ॥ ११६. स०२कोषे "वह्निमत्त्व०" इति लिखितं, परं "म" हरितालिका-लिप्तम् ॥ ११७. स०४कोषे "०दक-वह्नित्वावच्छिन्न-वह्नि" इति मात्रमस्ति । शेषः "एवं धू" इति यावान् पाठो नास्ति ॥ ११८. अस्मत्कोषे '०न्नाति०" इत्यस्ति; स०२कोषे च "ति" कुण्डली-कृतम् ॥ ११९. अस्मत्कोषे "एवं च" ॥ १२०. स० २ : "धूमा०" ॥ १२१. स०५ : "०गोल-वृ०" । स०१ : "वृत्तिर्" ॥ १२२. स० १, ४ : "भावः-प्रति"; स०२ कोषे विसर्गो हरितालिकया लुप्तः ॥ १२३. स० १-२, ४ कोषेषु "समवाय-" इति नास्ति ॥ १२४. अस्मदीय-स०२,४-५कोषेषु "धूमत्वं" इति, स०४कोषे च "धूमत्वं" इत्यस्ति ॥ १२५. अस्मत्कोषे "०न्नायो०" ॥ १२६.

'साध्यताऽवच्छेदकता-घटक'-[128]सम्बन्धेन बोध्यम्; तथा[129] च हेत्वधिकरणायो-गोलक-वृत्ति[130]-साध्यताऽवच्छेदक-सम्बन्धावच्छिन्न-[131]प्रतियोगिताऽवच्छेदकावच्छि-न्न-प्रतियोगिताको[132]=घटाभावः, [133]तत्प्रतियोगितायां समवाय-सम्बन्धेनान-वच्छेदकं=धूमत्वम्, समवाय-सम्बन्धेन तदवच्छिन्नो=धूमः; तत्सामानाधिकरण्यस्य वह्न्यावसत्त्वान्नातिव्याप्तिः[134]।

एवमपि 'हेतुताऽवच्छेदक-संयोग-सम्बन्धावच्छिन्न-वह्नित्वावच्छिन्न-वह्नि-रूप-हेत्वधिकरण-महानस-निष्ठ[135]-साध्यताऽवच्छेदक-सम्बन्धावच्छिन्न-प्रतियोगिताऽवच्छे-दकावच्छिन्न-[136]घटाभाव-प्रतियोगितायां समवाय-सम्बन्धेनानवच्छेदकं=धूमत्वम्, समवाय-सम्बन्धेन तदवच्छिन्नो=धूमः, तत्सामानाधिकरण्यं कालिक-सम्बन्धेन वह्न्या-वस्ति।' इत्यतिव्याप्तिः; अतः 'साध्य-सामानाधिकरण्यम्' इत्यत्र 'साध्यता' 'अव-च्छेदक'-सम्बन्धेन बोध्यम्;तथा च वह्नि-रूप हेत्वधिकरण-वृत्ति[137]-घटाभाव-प्रतियो-गिताऽनवच्छेदक-धूमत्वावच्छिन्नस्य साध्यताऽवच्छेदकीभूत-संयोग-सम्बन्धेन सामाना-धिकरण्यस्यायो-गोलकेऽभावान्नातिव्याप्तिः।

एवं[138] 'धूमवान्वह्नेः।' इत्यत्र 'हेतुताऽवच्छेदक[139]-संयोग-सम्बन्धाव-च्छिन्न-हेतुताऽवच्छेदक[140]-वह्नित्वावच्छिन्न-वह्नि-रूप-हेत्वधिकरण-पर्वत-वृत्ति-साध्य-ताऽवच्छेदक-संयोग[141]-सम्बन्धावच्छिन्न-प्रतियोगिताऽवच्छेदकावच्छिन्न-प्रतियोगिताको =घटाभावः, तत्प्रतियोगितायां [142]समवाय-सम्बन्धेनानवच्छेदकं=धूमत्वम्, तेन सम्बन्धेन [143]तदवच्छिन्नो=धूमः, तस्य साध्यताऽवच्छेदकीभूत-संयोग-सम्बन्धेन सामानाधिकरण्यं वह्नि-रूप-हेतावस्ति।' इत्यतिव्याप्तिः; अतो 'यावद्धेत्वधिकरणाव-च्छेदेन साध्य-सामानाधिकरण्यं' बोध्यम्; तथा च 'यावद्धेत्वधिकरणान्तर्गतायो-गोलके साध्यताऽवच्छेदक-सम्बन्धावच्छिन्न-साध्यताऽवच्छेदकीभूत[144]-धूमत्वावच्छिन्न-धूम-सामानाधिकरण्याभावान्नातिव्याप्तिः।

एवं च 'हेतुताऽवच्छेदक-सम्बन्धावच्छिन्न-हेतुताऽवच्छेदकावच्छिन्न-हेत्वधिकरणे

---

अस्मत्कोषे "रय" नास्ति।। १२७. स०२मात्र एव "इति" इति ॥ १२८. स० ५ : "क-" नास्ति। १२९. अस्मत्कोषे "तथा च" इति पुनरुक्तम् ॥ १३०. स० ४ : "संवृत्ति" ॥ १३१ अस्मदीय-स०१कोषयो : "प्रति० च्छिन्न" इति नास्ति ॥ १३२. स० २ कोषे "ो" हरितालिकया लुप्तम्; स०५कोषे च "०ताक घ०" इति वर्तते ॥ १३३. स० १ : "०भाव प्रतियोगितायां" इति, स० २-५ कोषेषु च "०भाव-प्र०" इति पाठः ॥ १३४. अस्मत्कोषे 'धूमादस०' ॥ १३५. स० ५ : "०निष्ठः सा०" ॥ १३६. स० १, ४ : "घटा०"। १३७. स० २ कोषे पाठोऽयम्; तदितरत्र "०वृत्तिः घ०" इत्यस्ति॥ १३८. अस्मत्कोषे "च" अप्यस्ति॥ १३९.स०१ : "कं सं०"॥ १४०. स०५ कोषे "क" नास्ति। "वह्नि०च्छेदक-" स०१ कोषे नास्ति॥ १४१. स०५ कोषे "संयोग" नास्ति॥ १४२. त्रयोदश-पत्रात्मकोऽपूर्णोऽस्म-त्कोषोऽत्र ("सम" इत्यत्र) समाप्तः॥ १४३. स०४ कोषे "तद० सम्बन्धेन" इति

दैशिक-विशेषणता-सम्बन्धेन वृत्तिः[१४५]। साध्यताऽवच्छेदक-सम्बन्धावच्छिन्न-प्रतियोगिताऽवच्छेदकावच्छिन्न-प्रतियोगिताको योऽभावः, तत्प्रतियोगितायां[१४६] साध्यताऽवच्छेदकता-घटक-सम्बन्धेनानवच्छेदकं[१४७] यत्साध्यताऽवच्छेदकं, साध्यताऽवच्छेदकता-घटक-सम्बन्धेन तदवच्छिन्नं यत्साध्यम्, तस्य साध्यताऽवच्छेदक-सम्बन्धेन साध्यसामानाधिकरण्यं [१४८]यावद्धेत्वधिकरणावच्छेदकावच्छेदेन[१४९]।' इति यावत् ॥

पक्षो लक्ष्यः। पक्षत्वं लक्ष्यताऽवच्छेदकम्। 'सिषाधयिषा-विरह-सह[१५०]-कृत-सिद्ध्यभाववत्त्वं' लक्षणम्। 'सिद्ध्यभावः=पक्षता।' इत्युक्तौ सिद्धि-सत्त्वे 'अनुमितिर्मे भूयात्।' इत्याकारकेच्छायां सत्यामनुमितिर्न स्यात्; अतः 'सिषाधयिषा-विरह-विशिष्टत्वं' 'सिद्धौ' विशेषणम्; तथा च 'पर्वतो [१५१]वह्निमान्।' इत्याकारक-सिद्धि-सत्त्वेऽपि 'पर्वते वह्न्यनुमितिर्मे[१५२] भूयात्।' इत्याकारकेच्छायां सत्यां [१५३]सिषाधयिषा-विरह-रूप-विशेषणाभाव-प्रयुक्त-विशिष्टाभाव-रूप-पक्षतायास्तत्र सत्त्वादनुमितिर्भवत्येव। (१) यत्र सिषाधयिषा नास्ति सिद्धिरस्ति, तत्र सिषाधयिषा-विशिष्ट-सिद्धेः सत्त्वान्नानुमितिः। (२) यत्र सिद्धिर्नास्ति, सिषाधयिषा वर्तते, तत्र सिषाधयिषा[१५४]-विरह-[१५५]रूप-विशेषण-विशेष्योभयाभाव-प्रयुक्त-विशिष्टाभाव[१५६]-सत्त्वादनुमितिः। (३) [१५७]यत्र सिषाधयिषा नास्ति, सिद्धिरपि नास्ति, तत्र विशेष्याभाव-[१५८]-प्रयुक्त-विशिष्टाभाव-पक्षताया स्तत्रापि सत्त्वादनुमितिः ॥ ४० ॥

(२.१६ बुद्धि-गुण-विवरणेऽनुमान-भेदयोर्लक्षणे)

**(२.१६. ii. क.आ) अनुमानं द्वि-विधं—(१) स्वार्थं, (२) परार्थं च। तत्र—**

**(१) स्वार्थं=स्वानुमिति-हेतुः। तथाहि—'(i) स्वयमेव भूयो-दर्शनेन 'यत्र धूमस्, तत्राग्निः।' इति महानसादौ व्याप्तिं गृहीत्वा पर्वत-समीपं गतः, (ii) तद्गते [१]चाग्नौ सन्दिहानः पर्वते धूमं पश्यन् व्याप्तिं स्मरति 'यत्र धूमस्,**

---

नास्ति ॥ १४४. स०५ कोषेतरेषु "०दक-घू०" इति पाठः ॥ १४५. स०४ : "त्ति" ॥ १४६. स०१ : "०ताया" इति, स०५ : "०तायाः" इत्यस्ति ॥ १४७. स०४ कोषे "अनव० सम्बन्धेन" इति नास्ति ॥ १४८. स०१-४ कोषेषु "यावद्" नास्ति ॥ १४९. स०१ कोषे "०रणताऽवच्छेदकावच्छेदकाव०" इत्यस्ति ॥ १५०. स०२ कोषे "सह" नास्ति ॥ १५१. स०२ कोषे "वह्नि०विशे" इति ग्रन्थो लिखितोऽपि कृष्ण-मस्या कृत्तो वर्तते ॥ १५२. स०१ कोषे "र्मे० सत्त्वादनुमिति" इति ग्रन्थो नास्ति ॥ १५३. स०४ कोषे "सिषाधयिषा-" नास्ति ॥ १५४. स०४ कोषेऽस्य स्थाने "सिद्धि-" इत्यस्ति ॥ १५५. स०५ : "रूपे" ॥ १५६. स०४ : "०वस्य स०" ॥ १५७. स०१-२, ४ कोषेषु पाठोऽयन्नास्ति ॥ १५८. स०५ : "०ष्योभ०" ॥ ४० ॥

१. शास्त्रिगलसंस्करणे "०च पर्वते धूमं पश्यन् अग्नौ सन्दिहानः व्या०" इति पाठः। निरुक्तौ यथा-धृत-पाठ एव व्याख्यातः। वस्तुतस्तु "पर्वत-समीपं गतः; (ii) पर्वते धूमं पश्यन् तद्गते चाग्नौ सन्दिहानः व्या०" इति पाठ एवोचितः। उपन्यासस्यापि कदा-

तत्राग्निः ।' इति; (iii) तदनन्तरं 'वह्नि-व्याप्य-धूमवानयं पर्वतः ।' इति ज्ञानमुत्पद्यते । अयमेव 'लिङ्ग-परामर्श' इत्युच्यते; (iv) तस्मात् 'पर्वतो वह्निमान् ।' इति ज्ञानम् = अनुमितिरुत्पद्यते । तदेतत्स्वार्थानुमानम् ।।

(२)यत्तु स्वयमेव धूमादग्निमनुमाय पर-प्रतिपत्त्यर्थं पञ्चावयव-वाक्यं प्रयुङ्क्ते, तत्परार्थानुमानम् । यथा—'(i) पर्वतो वह्निमान्; (ii) धूमवत्त्वात्; (iii) यो-यो धूमवान्, स-स वह्निमान्, यथा महानसः; (iv) तथा चायम्; (v) तस्मात्तथा ।' इति । अनेन प्रतिपादिताल्लिङ्गात्परोऽप्यग्निं प्रतिपद्यते ।। ४१ ।।

(बाल-प्रबोधिनी) अनुमानं विभजते 'अनुमानम्०' इति । (१) स्वार्थानुमान-लक्षणमाह 'स्वार्थम्०' इति । 'तथा हि' इत्यादि स्पष्टम् ।। (२)परार्थानुमानमाह 'यत्तु०' इति । उदाहरति 'यथा—पर्वत०' इति । महानसः = पाक-स्थानम् । (iv) तथा चायम्, (v) तस्मात्तथा = '(iv) धूमवाँश्चायम्, (v) तस्मादग्निमान्' इत्यर्थः । 'अनेन = वाक्येन प्रतिपादिताल्लिङ्गात् = पर्वत-वृत्तित्वेन निरूपिताद् वह्नि-व्याप्य-धूमादन्योऽप्यग्निं प्रतिपद्यते = जानाति ।' इत्यर्थः ।।

(उपन्यासः) (१) स्वार्थ, (२) परार्थ च' इत्यनुमान-विभागोक्तिः । (१) स्वार्थानुमानं लक्ष्यम् । स्वार्थानुमानत्वं लक्ष्यताऽवच्छेदकम् । 'स्वार्थानुमिति-हेतुत्व' लक्षणम् । [2]तथाहि—"बहुषु [3]स्थलेषु 'यत्र [4]धूमस्, तत्र वह्निः ।' इति व्याप्तिं गृहीत्वा पर्वत-समीपं गते सति तत्र धूमन्दृष्ट्वा सिषाधयिषायां सत्यां धूम-दर्शनेनोद्बुद्ध[5]-व्याप्ति-स्मरणानन्तरं 'वह्नि-व्याप्य-धूमवानयं पर्वतः ।' इति विशिष्ट-परामर्शानन्तरं स्वस्यैव 'पर्वतो वह्निमान् ।' इत्यनुमितिर्जायते; तद्धेतुः ।" इत्यर्थः ।। (२) परार्थानुमानं लक्ष्यम् । परार्थानुमानत्वं लक्ष्यताऽवच्छेदकम् । 'परार्थानुमिति-हेतुत्वं' लक्षणम् । तथाहि —'(i) पर्वतो वह्निमान्; (ii) धूमवत्त्वात्; (iii) यो-यो धूमवान्, सोऽग्निमान्, यथा महानसः; (iv) तथा चायम्; (v) तस्मात्तथा ।' इति । अनेन प्रतिपादितात् पञ्चावयव-वाक्यात् परोऽपि वह्निं प्रतिपद्यते ।। ४१ ।।

(२.१६ बुद्धि-विवरणेऽनुमानावयवानां लक्षणानि)

(२.१६ ii. क. आ. २. i–v) प्रतिज्ञा-हेतूदाहरणोपनयन-निगमनानि पञ्चावयवाः—(i) 'पर्वतो वह्निमान् ।' इति प्रतिज्ञा; (ii) 'धूमवत्त्वात् ।' इति हेतुः; (iii) 'यो-यो धूमवान्, स-स वह्निमान्, यथा महानसः ।' इत्युदाहरणम्; (iv) 'तथा चायम् ।' इत्युपनयः; (v) 'तस्मात्तथा ।' इति निगमनम् ।। ४२ ।।

(बाल-प्रबोधिनी) अवयवानाह 'प्रतिज्ञा०' इत्यादि । स्पष्टम् ।।

---

चिदत्रैव स्वारस्यम् ।। २. स०४ : "तथा०" ।। ३. स०४ : नास्तीदम् ।। ४. स०४ : "०स्तत्र० तत्र" नास्ति ।। ५. स०५ : "०द्ध०" ।। ६. स०१-४ : "०यवात्" ।। ४१ ।।

(उपन्यासः) [1]न्यायो लक्ष्यः । न्यायत्वं[1] लक्ष्यताऽवच्छेदकम् । 'उचितानुपूर्वीक[2]-प्रतिज्ञाऽऽदि[3]-पञ्चक-समुदायत्वं' लक्षणम् । 'समुदाय-'मात्रोक्तौ घटादि-समुदायेऽतिव्याप्तिः; अतः 'प्रतिज्ञाऽऽदि-' इत्युक्तम्; घटादि-समुदाये प्रतिज्ञाऽऽदि-समुदाय-[4]त्वाभावान्नातिव्याप्तिः । 'प्रतिज्ञाऽऽदि-समुदायत्व[5]-' मात्रोक्तौ [6]व्युत्क्रमोक्त-प्रतिज्ञाऽऽदि-समुदायेऽतिव्याप्तिः; अतः 'उचितानुपूर्वीक-'इत्युक्तम् । 'उचितानुपूर्वीक-'मात्रोक्तौ एकत्वादि-दश-पर्यन्त-सङ्ख्याऽऽदावति[7]व्याप्तिः; अतः 'प्रतिज्ञाऽऽदि-समुदायत्वम् उक्तम् ॥

[8]अवयवो लक्ष्यः । अवयवत्व लक्ष्यताऽवच्छेदकम् । 'न्यायान्तर्गतत्वे सति प्रतिज्ञाऽऽद्यन्यतमत्वं' लक्षणम् ॥

(i) प्रतिज्ञा लक्ष्या । प्रतिज्ञात्वं लक्ष्यताऽवच्छेदकम् । 'न्याय-घटक-पर्वत-विशेष्यक-साध्य-प्रकारकत्वं' लक्षणम् । 'साध्य-प्रकारकत्व[9]-' मात्रोक्तौ वह्निमदिन्धनम्' इत्याकारक-वाक्येऽतिव्याप्तिः; अतः 'पक्ष-विशेष्यकत्वम्' उक्तम्; तत्र पक्ष-विशेष्यकत्वाभावान्नातिव्याप्तिः । 'पक्ष-विशेष्यकत्व-' मात्रोक्तौ 'धूमवान्पर्वतः ।' इत्याकारक-वाक्येऽतिव्याप्तिः; तत्र पक्ष-विशेष्यकत्वस्य[10] सत्त्वात्; अतः साध्य-प्रकारकत्वम्' इत्युक्तम् । 'पक्ष-विशेष्यक-साध्य-प्रकारकत्वम्' इत्युक्तौ न्याय-बहिर्भूत-'पर्वतो वह्निमान्-' इत्याकारक उदासीन-वाक्येऽतिव्याप्तिः; अतो 'न्याय-घटितत्वम्' उक्तम्; उदासीन-वाक्ये न्याय-घटितत्वाभावान्नातिव्याप्तिः ।

(ii) हेतु-वाक्यं लक्ष्यम्[11] । हेतु-वाक्यत्वं लक्ष्यताऽवच्छेदकम् । 'न्याय-घटितत्वे सति पञ्चम्यन्त-लिङ्ग-प्रतिपादकत्वं' लक्षणम् । 'लिङ्ग-प्रतिपादकत्व-' मात्रोक्तौ 'धूम' इत्याकारक-वचने[12]ऽतिव्याप्तिः; अतः 'पञ्चम्यन्तत्वम्' उक्तम्; तत्र पञ्चम्यन्तत्वाभावान्नातिव्याप्तिः । 'पञ्चम्यन्तत्व-'[13] मात्रोक्तौ 'घटात्[14]' इत्याकारक-वचनेऽतिव्याप्तिः; अतो 'लिङ्ग-प्रतिपादकत्वम्' उक्तम्; तत्र लिङ्ग-प्रतिपादकत्वाभावान्नातिव्याप्तिः । 'पञ्चम्यन्त-लिङ्ग-प्रतिपादकत्वम्'[15] उक्तौ उदासीन-'धूमाद्-' इत्याकारक-[16]वाक्येऽतिव्याप्तिः; अतो 'न्याय-घटितत्वम्' उक्तम्; तत्र न्याय-घटितत्वाभावान्नातिव्याप्तिः ।

(iii) उदाहरण-वाक्यं लक्ष्यम् । उदाहरण-वाक्यत्व लक्ष्यताऽवच्छेदकम् । 'न्याय-घटित-हेतु-विशेष्यक-व्याप्ति-प्रतिपादकत्वं' लक्षणम् । 'हेतु-विशेष्यकत्व-' मात्रोक्तौ

---

१. अन्येषु कोषेषु यथा-यथम् "अवयवो", "अवयवत्वम्" इति वर्तेते ॥ २. स०१-४ कोषेषु "पूर्वि०" इति, स०५ कोषे च "पुर्व०" इति । एवमग्रेऽपि बोध्यम् ॥ ३. स०४ : "ऽऽदि" नास्ति; स०१-४ कोषेषु "पञ्चक-" नास्ति ॥ ४. स०१ : "०वत्वान्ना०" इति, स०४ : "०य-भावान्ना०" इत्यस्ति ॥ ५. स०३ : "०य-मा०"॥ ६. स०५ : "उ०" । ७. स०१-४ : "दौऽति०" ॥ ८. स०५ एवायम्प्रघट्टः ॥ ९. स०३: "०क-मा०" ॥ १०. स०१,४ कोषयोः "०कस्य" ॥ ११. स०१ : "लक्ष्यम्" नास्ति ॥ १२. स०३ : "ज्ञने" ॥ १३. स०१, ३-४ कोषेषु "०त्वमु०" ॥ १४. स०४ : "घटाद०" ॥ १५. स०२ : "०त्वोक्तौ" ॥ १६. स०५ : "वचने" ॥ ४२ ॥

'नील-धूम' इत्याकारक-वाक्येऽतिव्याप्तिः; हेतु-विशेष्यकत्वस्य तत्र सत्त्वात्; अतो 'व्याप्ति-प्रतिपादकत्वम्' उक्तम्। 'व्याप्ति-प्रतिपादकत्व'-मात्रोक्तौ 'व्याप्य' इत्याकारक-वचनेऽतिव्याप्तिः; अतो 'हेतु-विशेष्यकत्वम्' उक्तम्; तत्र हेतु-विशेष्यकत्वाभावादहेतोरपि विषयकत्वान्नातिव्याप्तिः। 'हेतु-विशेष्यक-व्याप्ति-प्रतिपादकत्वम्' उक्तौ 'धूमो वह्नि-व्याप्य' इत्याकारकोदासीन-वाक्येऽतिव्याप्तिः; अतो 'न्याय-घटितत्वम्' उक्तम्; तत्र न्याय-घटितत्वाभावान्नातिव्याप्तिः।

(iv) उपनय-वाक्यं लक्ष्यम्। उपनय-वाक्यत्वं लक्ष्यतावच्छेदकम्। 'पक्ष-विशेष्यक-व्याप्ति-विशिष्ट-हेतु-प्रकारकत्वं' लक्षणम्। 'पक्ष-विशेष्यकत्व-'मात्रोक्तौ 'नील-पर्वत' इत्याकारक-वाक्येऽतिव्याप्तिः; तत्र पक्ष-विशेष्यकत्वस्य सत्त्वात्; अतो 'हेतु-प्रकारकत्वम्' उक्तम्। 'हेतु-प्रकारकत्व'-मात्रोक्तौ 'धूमवान्महानस' इत्याकारक-वाक्येऽतिव्याप्तिः; अतः 'पक्ष-विशेष्यकत्वम्' उक्तम्; तत्र पक्ष-विशेष्यकत्वाभावान्नातिव्याप्तिः; 'पक्ष-विशेष्यक-हेतु-प्रकारकत्वम्' इत्युक्तौ 'धूमवान्पर्वत' इत्याकारक-वाक्येऽतिव्याप्तिः; अतो 'व्याप्ति-विशिष्ट-' इत्युक्तम्; तत्र व्याप्ति-विशिष्ट हेतु-प्रकारकत्वाभावान्नाति-व्याप्तिः। 'व्याप्ति-विशिष्ट-हेतु-प्रतिपादकत्वम्' उक्तौ न्याय-बहिर्भूत-'वह्नि-व्याप्य-धूमवान्'-इत्याकारक-वाक्येऽतिव्याप्तिः; अतो 'न्याय-घटितत्वम्' अपि बोध्यम्; तत्र न्याय-घटितत्वाभावान्नातिव्याप्तिः।

(v) निगमन-वाक्यं लक्ष्यम्। निगमन-वाक्यत्वं लक्ष्यताऽवच्छेदकम्। 'पक्ष-विशेष्यकाबाधित-साध्य-प्रतिपादकत्वं' लक्षणम्। 'पक्ष-विशेष्यक-साध्य-प्रतिपादकत्वम्' उक्तौ प्रतिज्ञा-वाक्येऽतिव्याप्तिः; अतो 'ऽबाधितत्वम्' उक्तम्; 'पक्ष-विशेष्यकत्व'-'साध्य-प्रकारकत्व'योः 'नील-पर्वतः', 'वह्निमदिन्धनम्' इत्याकारक-वाक्ययोरतिव्याप्ति-वारणं प्रयोजनं बोध्यम्। न्याय-बहिर्भूत-वाक्येऽतिव्याप्ति-वारणाय 'न्याय-घटितत्वम्' अपि बोध्यम्॥ ४२॥

(२.१६ बुद्धि-गुण-विवरणेऽनुमिति-करणं=लिङ्ग-परामर्शः)

(२ १६. ii. क. आ. १-२) **स्वार्थानुमिति-परार्थानुमित्योर्लिङ्ग-परामर्श एव करणम्[1]। तस्माल्लिङ्ग-परामर्शोऽनुमानम्॥ ४३॥**

(बाल-प्रबोधिनी) अनुमिति-करण-निरूपणमुपसंहरति 'स्वार्था॰' इत्यादि।

लिङ्ग-परामर्शः=साध्य-व्याप्य-लिङ्ग-पक्ष-वृत्तित्व-ज्ञानम्॥

(उपन्यासः) तस्मादनुमितित्वावच्छिन्नं प्रति लिङ्ग-परामर्श एव कारणं बोध्यम्॥ ४३॥

(२.१६ बुद्धि-गुण-विवरणेऽनुमितिप्रसङ्गे लिङ्ग-लक्षणम्)

(२.१६.ii.क. आ.) **लिङ्गं त्रि-विधम्—'(१)अन्वय-व्यतिरेकि, (२) केवलान्वयि, (३)केवल-व्यतिरेकि च' इति। (१)अन्वयेन (आ)व्यतिरेकेण च**



१. "कोषेषु 'कारणम्' इति" इति बोडो। परन्तूपन्यासेऽपि च "कारणम्" इति लभ्यते। दीपिकाऽऽदौ "करणम्" इत्येव सूच्यते॥ ४३॥

व्याप्तिमद्=अन्वय-व्यतिरेकि । यथा—वह्नौ साध्ये धूमवत्त्वम् । '(अ)यत्र धूमस्, तत्राग्निः, यथा—महानसे ।' इत्यन्वय-व्याप्तिः । (आ)'यत्र वह्नि-र्नास्ति, तत्र धूमोऽपि नास्ति; यथा—महा-ह्रदे ।' इति व्यतिरेक-व्याप्तिः ।[1] (२)अन्वय-मात्र-व्याप्तिकं=केवलान्वयि । यथा—घटोऽभिधेयः, प्रमेयत्वात्, पटवत् । अत्र प्रमेयत्वाभिधेयत्वयोर्व्यतिरेक-व्याप्तिर्नास्ति, सर्वस्यापि प्रमेय-त्वादभिधेयत्वाच्च । (३)व्यतिरेक-मात्र-व्याप्तिकं=केवल-व्यतिरेकि । यथा—'(i)पृथिवीतरेभ्यो भिद्यते; (ii) गन्धवत्त्वात्; (iii) यदितरेभ्यो न भिद्यते, न तद् गन्धवद्; यथा जलम्; (iv) न चेयं तथा, (v) तस्मान्न तथा' इति ॥ अत्र '(iii) यद् गन्धवत्, तदितर-भिन्नम् ।' इत्यन्वय-दृष्टान्तो नास्ति, पृथिवी-मात्रस्य पक्षत्वात् ॥ ४४ ॥

(बाल-प्रबोधिनी) लिङ्गं विभजति 'लिङ्गं-त्रिविधम्०' इति । (१) अन्वय-व्यतिरेकि [2]लक्षयति 'अन्वयेन०' इति । केवल-व्यतिरेकिण्यतिव्याप्ति-निवृत्त्यै 'अन्वयेन' इत्युक्तम् । केवलान्वयिनि तन्निराकरणाय 'व्यतिरेकेण' इति । उदाहरति 'यथा—' इति । व्याप्ति-द्वयमुदाहरति 'यत्र०' इत्यादि । सर्वत्र व्याप्त्यर्थं 'यत्र-यत्र', 'तत्र-तत्र' इति ज्ञेयम् । उदाहृते [3]व्याप्ती लक्षयति 'यत्सत्त्वे०' इत्यादि । (अ)'हेतु-सत्त्वे साध्य-सत्त्वम्=अन्वयः; (आ) साध्याभावे हेत्वभावो=व्यतिरेकः ।' इत्यर्थः । (२) केवलान्वयि[4] लक्षयति 'अन्वय०'[5] इति । तत्र केवल-व्यतिरेकिण्यति-व्याप्ति-वारणाय 'अन्वय'- इति । अन्वय-व्यतिरेकिणि तद्व्युदासाय 'मात्र-' इति । उदाहरति 'यथा—' इति । 'अत्र'=अस्मिन्ननुमाने "'यत्राभिधेयत्वं नास्ति, तत्र प्रमेयत्वमपि नास्ति ।' इत्येवं-रूपं व्याप्ति-स्थलं 'नास्ति' ।" इत्यर्थः । (३) व्यतिरेकि[6] लक्षयति 'व्यतिरेक०' इति । अन्वयिन्यतिव्याप्ति-निरासाय 'व्यतिरेक०' इति । अन्वय-व्यतिरेकिणि तत्परि-हाराय 'मात्र' इति । [7]व्यतिरेक्युदाहरति "यथा—'पृथिवी०' " इति । अत्र पृथिव्या इतर-भेदः=साध्यम्; पृथिव्या इतरच्च सर्वं जलादि-पदार्थ-जातम् । '(iii) यत्र-यत्र=जलादौ पृथिवीतर=जलादि-भेदाभावः, तत्र-तत्र गन्धवत्त्वाभावः ।' इति व्यतिरेक[8]-व्याप्तिर्दर्शिता । (iv) 'न चेयं तथा'—'इयं'=पृथ्वी 'तथा'=जलादिवद् गन्धाभाववती न भवति । (v) 'तस्मान्न तथा'—जलादि यथा पृथिवीतर=जलादि-भेदाभाववत्, तथा पृथिवीतर=जलादि-भेदाभाववती न; किन्तु तद्भेदवती भवति ।' इत्यर्थः । अस्मिन्ननुमानेऽन्वय-व्याप्त्यभावं दर्शयति—'अत्र '(iii) यद्०" इति ॥

---

१. 'जयपुरे पुस्तकालये यल्लिथो-संस्करणम्, तत्रास्मिन्प्रसङ्गे "यत्सत्त्वे तत्स-त्त्वम्=अन्वयः । यदभावे तदभावो=व्यतिरेकः ।" इत्यप्यस्ति इति बोडाः । बाल-प्रबोधिन्यामस्य प्रतीकमपि सभूमिका-बन्धन-व्याख्यमुपलभ्यते । अन्यासु टीकासु तु नेद-मस्ति ॥ २. अस्मत्कोषे "०किणं लक्षणम् 'अनयेन' इति ।" अस्ति । ३. अस्मत्कोषे "व्याप्ति" ॥ ४. अस्मत्कोषे "०यिनं ल०" ॥ ५. अस्मत्कोषे "अन्यथेति" ॥ ६. अस्मत्कोषे "०किणं ल०" ॥ ७. [illegible] ०दाहरणमु०" ॥ ८. अस्मत्कोषे "०कि

'पृथ्वी-मात्रस्य पक्षत्वेन दृष्टान्तत्वाभावः; पृथ्वीतरे तु न गन्धवत्त्वं हेतुः, न च पृथ्वीतरभेदः साध्यम् ।' इति न अन्वय-व्याप्ति-स्थलम्=अन्वय-दृष्टान्तः ॥

(उपन्यासः)'लिङ्गं त्रिविधम्' इति लिङ्ग-विभागोक्तिः । (१)अन्वय-व्यतिरेकि लिङ्गं लक्ष्यम् । अन्वय-व्यतिरेकित्वं लक्ष्यताऽवच्छेदकम् । 'अन्वय-व्याप्तिमत्त्वे सति व्यतिरेक-व्याप्तिमत्त्वं' लक्षणम् । 'अन्वय-व्याप्ति-मत्त्व' मात्रमुक्तौ[9] केवलान्वयिन्यतिव्याप्तिः; अन्वय-व्याप्तिमत्त्वस्य सत्त्वात्; अतो 'व्यतिरेक-व्याप्तिमत्त्वमुक्तम्[10] । 'व्यतिरेक-व्याप्तिमत्त्व'-मात्रमुक्तौ[11] केवल-व्यतिरेकिण्यतिव्याप्तिः[12]; तत्र व्यतिरेक-व्याप्तिमत्त्वस्य सत्त्वात्; अतो विशिष्टमुपात्तम्; तत्र विशिष्टस्याभावान्नातिव्याप्तिः ॥ (२) केवलान्वयि[13] लक्ष्यम् । केवलान्वयित्वं लक्ष्यताऽवच्छेदकम् । 'अन्वय-मात्र-व्याप्तिमत्त्वं' लक्षणम् । अत्र 'मात्र'-पदानुपादानेऽन्वय-व्यतिरेकिण्यतिव्याप्तिः; अतस्तदुपादानम्; तत्र व्यतिरेक-व्याप्तेरपि सत्त्वान्नातिव्याप्तिः ॥ (३) केवल-व्यतिरेकि लिङ्गं लक्ष्यम् । केवल-व्यतिरेकि-लिङ्गत्वं लक्ष्यताऽवच्छेदकम् । 'व्यतिरेक-मात्र-व्याप्ति-मत्त्वं' लक्षणम् । 'मात्र'-पदस्य व्यतिरेकेतर[14]-व्याप्ति-शून्यत्वे सति व्यतिरेक-व्याप्ति-मत्त्वम् । 'व्यतिरेक-व्याप्ति-शून्यत्व'-मात्रोक्तौ प्रमेयत्वादावतिव्यातिः; अतो 'व्यतिरेक-व्याप्तिमत्त्वम्' उक्तम्; तत्र व्यतिरेक-व्याप्तिमत्त्वाभावान्नातिव्याप्तिः । 'व्यतिरेक-व्याप्तिमत्त्व'-मात्रोक्तौ धूमेऽतिव्याप्तिः; तत्रापि व्याप्तेः सत्त्वात्; अतः 'तदितर-शून्यत्वम्' उक्तम्; तत्र व्यतिरेक-व्याप्तीतर[15]=अन्वय-व्याप्ति-शून्यत्वा-[16] भावान्नातिव्याप्तिः; तथाहि साध्याभाव[17]-व्यापकीभूताभाव-[18]प्रतियोगित्वम् । अस्ति चेदं लक्षणम्—'(i) पृथिवीतरेभ्यो भिद्यते, (ii) गन्धवत्त्वात्' इत्यत्र साध्याभावः=इतर-भेदाभावः[19], तद्व्यापकीभूतो[20]ऽभावो=गन्धाभावः, तत्प्रतियोगित्वं[21] 'गन्ध'-रूप-हेतावस्ति; [22]इति लक्षण-समन्वयः ॥ ४४ ॥

(२.१६ बुद्धि-विवरणे पक्ष-सपक्ष-विपक्षाणां लक्षणानि)

(२.१६. ii. क. आ) सन्दिग्ध-साध्यवान्=पक्षः । यथा—धूमवत्त्वे

---

व्या०" ॥ ९. स०३, ५ कोषयोः "०त्रो०" ॥ १०. स०४ : "व्यति० मुक्तम् ।" इति नास्ति ॥ ११. स०२ कोषे "मु" इति हरितालिकया सँल्लिप्य "०त्रो०" इति ओकार-मात्रा लिखिता; स०४कोषे च "मात्रोमुक्तौ" इति पाठः ॥ १२. सर्वत्र "०न्य०" इति दन्त्य-घटितः पाठः । स० ३ कोषे "अन्वय-व्याप्ति०ण्यतिव्याप्तिः ।" इति ग्रन्थो नास्ति ॥ १३. स०३ : "यी०"; स०५ : "०यि लक्ष्यः" ॥ १४. स०१ : "०रेकी०" इत्यस्ति । स०२ कोषे इदं कर्तित्वा "०रेके०" इति कृतमस्ति । स०४ कोषे च "०रेकिरत०" इत्यस्ति ॥ १५. स०२, ४ कोषयोः "०तरान्व०" इति, १, ३, ५ कोषेषु च "०तर अन्व०" इति ॥ १६. स०४ : "ता" ॥ १७. स०४ : "०भावा-व्या०" इति ॥ १८. स०५ : "प्रति" नास्ति ॥ १९. स०१-३ कोषेषु "०भाव-त०" ॥ २०. स०५ : "०भूतो योऽ०" ॥ २१. स०४ : "[illegible]" ॥ २२. स०३ : "इति" नास्ति ॥ ४४ ॥

**हेतौ पर्वतः । निश्चित-साध्यवान्=स-पक्षः । यथा—तत्रैव महानसः । निश्चित-साध्याभाववान्=वि-पक्षः । यथा—तत्रैव महा-ह्रदः ।। ४५ ।।**

(बाल-प्रबोधिनी) पक्ष-लक्षणमाह 'सन्दिग्ध०' इति । तत्र 'साध्यवान्' इति वपक्ष-व्यावृत्तिः । स-पक्षेऽतिव्याप्ति-निरासाय 'सन्दिग्ध-' इति । उदाहरति "यथा—'धूम०' " इति ।। स-पक्षं लक्षयति 'निश्चित०' इति । पक्ष-विपक्षयोरतिव्याप्ति-निरासाय 'निश्चित-साध्यवान्' इति । उदाहरति "यथा—'तत्र०' " इति ।। वि-पक्षं लक्षयति 'निश्चित०' इति । पक्ष-सपक्ष-व्यावृत्त्यर्थं पद-द्वयम् । उदाहरति "यथा—तत्र०' " इति ।।

(उपन्यासः) पक्षो लक्ष्यः । पक्षत्वं लक्ष्यताऽवच्छेदकम् । 'सन्दिग्ध[1]-साध्यवत्त्वं' लक्षणम् । 'साध्यवत्त्व-' मात्रोक्तौ स-पक्षेऽतिव्याप्तिः, अतः 'सन्दिग्ध-' इत्युक्तम् । 'सन्दिग्धत्व-' मात्रोक्तौ सन्देहेऽतिव्याप्तिः; तत्रापि सन्दिग्धत्वस्य सत्त्वात् 'साध्य-' इत्युक्तम् ।। स-पक्षो लक्ष्यः । स-पक्षत्वं लक्ष्यताऽवच्छेदकम् । 'निश्चित-साध्यवत्त्व' लक्षणम् । 'साध्यवत्त्व-'मात्रोक्तौ पक्षेऽतिव्याप्तिः; अतो 'निश्चितत्वम्' उक्तम्; तत्र निश्चितत्वाभावान्नातिव्याप्तिः । 'निश्चितत्व-' मात्रोक्तौ निश्चयात्मक-ज्ञानेऽतिव्याप्तिः; तत्रापि निश्चितत्वस्य सत्त्वात; अतः 'साध्य-' इत्युक्तम् ।। विपक्षो लक्ष्यः । विपक्षत्वं लक्ष्यताऽवच्छेदकम् । 'निश्चित-साध्याभाववत्त्वं' लक्षणम् । 'साध्याभाववत्त्व-' मात्रोक्तौ पक्षेऽतिव्याप्तिः; अतो 'निश्चित-' इत्युक्तम्; तत्र निश्चितत्वाभावान्नातिव्याप्तिः । 'निश्चितत्व-' मात्रोक्तौ ज्ञानेऽतिव्याप्तिः; अतः 'साध्याभाव-' इत्युक्तम् ।। ४५ ।।

(२.१६ बुद्धि-गुण-विवरणे हेत्वाभासोद्देशः)

**(२.१६.ii.क.आ.१-५) सव्यभिचार-विरुद्ध-सत्प्रतिपक्ष-असिद्ध-बाधिताः पञ्च हेत्वाभासाः ।। ४६ ।।**

(बाल-प्रबोधिनी) सद्धेतुर्निरूपितः । हेत्वाभासानाह 'सव्यभिचार०' इति ।।

(उपन्यासः) हेत्वाभासो लक्ष्यः । हेत्वाभासत्वं लक्ष्यताऽवच्छेदकम् । 'अनुमिति-[1]तत्करणान्यतर-प्रतिबन्धक-यथाऽर्थ[2]-ज्ञान-विषयत्वं' लक्षणम् । अनुमिति-प्रतिबन्धक-यथाऽर्थ-ज्ञान-विषयत्वस्य '[3]बाध-सत्प्रतिपक्ष-विरुद्ध' एतत्त्रये सत्त्वेऽपि सव्यभिचारादाव-[4]भावादव्याप्तिः; अतः 'अन्यतर-' इत्युक्तम्; अनुमिति-करण-व्याप्ति-ज्ञान-पक्ष-धर्मता-ज्ञान-प्रतिबन्धकत्वस्य सत्त्वान्नाव्याप्तिः[5] । 'अनुमिति-करण-प्रतिबन्धक-'मात्रोक्तौ बाधादावव्याप्तिः; अतः 'अनुमिति-प्रतिबन्धकत्वम्' उक्तम्[6] । अनुमिति-[7]प्रतिबन्धक-ज्ञान-विषयत्वं पर्वते साध्याभाव-भ्रममादाय धूमेऽप्यस्ति, इत्यतिव्याप्तिः; अतो 'यथाऽर्थ-'

---

१. स०४ : "सन्ध-सा०" ।। ४५ ।।

१. स०३ : "तत्का०" ।। २. स०२ : "यथाऽर्थ" इति पुनरुक्तम् । स०४कोषे सर्व-स्थलेषु 'यथाऽर्थाज्ञान०" इत्यस्ति ।। ३. स०४ : 'बाधक-" ।। ४. स०५ : "०वभाव-व्याप्तिः" ।। ५. स०५ : "०न्नातिव्याप्तिः" ।। ६. स०५कोष इतोऽग्रे "अनुमिति-बन्धकत्वम् ।" इत्यस्ति [illegible] 'अति' नास्ति ।। ४६ ।।

इत्युक्तम्। एवं च 'अनुमिति-तत्करणान्यतर-प्रतिबन्धक-यथाऽर्थ-ज्ञान-विषयत्वं = हेत्वाभासत्वम्।' इति पर्यवसन्नम्॥ ४६॥

(२.१६ बुद्धि-गुण-विवरणे १ सव्यभिचार-हेत्वाभास-लक्षणम्)

(२.१६.ii.क.आ १) **सव्यभिचारः = अनैकान्तिकः। स त्रि-विधः—(i) साधारण-(ii) असाधारण-(iii) अनुपसंहारि-भेदात्। तत्र (i) साध्याभाववद्-वृत्तिः = साधारणोऽनैकान्तिकः[1]। यथा—'पर्वतो वह्निमान्, प्रमेयत्वात्।' इति प्रमेयत्वस्य वह्न्यभाववति = ह्रदे विद्यमानत्वात्। (ii) सर्व-सपक्ष-विपक्ष-व्यावृत्तः[2], पक्ष-मात्र वृत्तिर्[3] = असाधारणः। यथा—'शब्दो नित्यः, शब्द-त्वात्।' इति शब्दत्वं सर्वेभ्यो नित्येभ्योऽनित्येभ्यश्च व्यावृत्तं शब्द-मात्रवृत्ति। (iii) अन्वय-व्यतिरेक-दृष्टान्त-रहितः = अनुपसंहारी। यथा—'सर्वमनित्यम्, प्रमेयत्वात्।' इति; अत्र सर्वस्यापि पक्षत्वाद् दृष्टान्तो नास्ति॥ ४७॥**

(बाल-प्रबोधिनी) सव्यभिचार पर्यायमनैकान्तिकं विभजते 'स त्रि-विध०" इति। (i) साधारणं लक्षयति "तत्र (i) 'साध्या०" इति—'तत्र' = त्रिषु। 'हेतुः' इत्यध्या-हारः। 'वृत्ति'-मात्रोक्तौ पक्ष-वृत्ति सद्धेतौ, 'साध्यवद्वृत्तिः' इत्युक्तौ सपक्ष-वृत्ति-सद्धेताव-तिव्याप्तिः, इति 'साध्याभाव-' इत्युक्तम्। 'साध्याभाव-वृत्तिः' इत्युक्तौ हेतोरभावः[4] =

---

१. कुप्पूस्वामि-संस्करणे "अनैकान्तिकः" इति नास्ति; इतरत्र (बोडासशास्त्रि-गलगुरुप्रसाद-संस्करणेषु) त्वस्ति; निरुक्तौ तु त्रिष्वपि भेदेषु "स साधारणानैकान्तिक-हेत्वाभास" इति यदुक्तम्, तदेकस्यात्रैकत्रैव सत्त्वे न प्रमाणम्। शैली-दृष्ट्या त्रिषु भेदेषु केवलमिहैवास्य पाठो नोचित इव। दीपिकायामपि भेद-लक्षणोत्थानिकासु नेदं गृहीतम्। इत्यस्मन्मते तु नानेनेह भाव्यम्॥ २. बोडासो द्वयोः कोषयोर् "विपक्ष-" इति नास्ति। निरुक्तावपि " 'सर्व-सपक्ष-व्यावृत्त' इति बहुषु पुस्तकेषु पाठो दृश्यते।" इत्युक्तम्। वाक्य-वृत्तौ, दीपिका-प्रकाशे च विपक्ष-व्यावृत्तत्वं न व्याख्यातम्; केवलं सपक्ष-व्यावृत्तत्वं व्याख्यातम्। न्याय-बोधिन्या बोडास-संस्करणे 'विपक्ष-" इति वर्तते, परं तत्रापि व्याख्यानं सर्व-सपक्ष-व्यावृत्तत्वस्यैव लभ्यते, इतर-संस्करणेषु तु "विपक्ष-" इति नास्ति। उपन्यासस्यापि चतुर्षु कोषेषु "विपक्ष-" इति नास्ति; अत्रापि सर्व-सपक्ष-व्यावृत्तिरेव व्याख्याता। पद-कृत्ये, निरुक्तौ, बाल-प्रबोधिन्यां, रामरुद्रीये, नृसिंह-प्रकाशिकायां च विपक्ष-व्यावृत्ति-व्याख्यानमस्ति। तर्क-सङ्ग्रहे च सर्व-सपक्ष-व्यावृत्तिः "सर्वेभ्यो नित्येभ्यो···व्यावृत्तम्।" इत्यनेन व्याख्याता, सर्व-विपक्ष-व्यावृत्तिश्च "अनित्येभ्यो व्यावृत्तम्।" इत्यनेन सूचितेति यथा-धृतः पाठ एव प्रामाणिकः॥ ३. बोडास एकस्मिन्कोष एवेदम्। शास्त्रिगलसंस्करणे पदमिदं नास्ति। टीकास्वपि प्रायो-वृत्त्येदं न व्याख्यातम्। परं तर्क-सङ्ग्रहे "शब्दत्वं···शब्द-मात्र-वृत्ति" इत्यत्र पक्ष-मात्र-वृत्तित्वं व्याख्यातम्। पद-कृत्ये च व्याख्यातमपीति मौलिकमेवेदमिति प्रतीयते॥ ४. शास्त्रिगलसंस्करणे "इति" इति नास्ति। भेदान्तर-विवरणेषु तत्सत्त्वादत्रापि स्यादेवे-त्युचितम्॥ ५. अस्मत्कोषे "०भावो वा०" इति, मु० कोषे च "०भावे अ०" इति

अवर्तमानत्वादसम्भवः, इति 'साध्याभाववद्वृत्तिः' इत्युक्तम् । उदाहरति 'यथा—' इति ॥ (ii)असाधारणं लक्षयति 'सर्व०' इति । सपक्ष-वृत्ति-[6]सद्धेतौ, विपक्ष वृत्ति=विरुद्धे, उभयावृत्ति=[7]अप्रमेयत्वादौ चातिव्याप्ति-निरासाय क्रमेण विशेषणानि । उदाहरति 'यथा—' इति ॥ (iii)अनुपसंहारिणं लक्षयति 'अन्वय०' इति । अन्वय-दृष्टान्त-रहितत्वं व्यतिरेकिणि, व्यतिरेक-दृष्टान्त-रहितत्वमन्वयि-सद्धेतौ[8] वर्तते; तयोरतिव्याप्तिर्मा[9] भूदिति 'उभय-दृष्टान्त-रहितत्वम्' उक्तम् । उदाहरति "यथा—सर्वम्०' " इति ॥

(उपन्यासः) (१.i) साधारणो लक्ष्यः । साधारणत्वं लक्ष्यताऽवच्छेदकम् । "साध्याभाववद्वृत्तित्वं' लक्षणम् । 'वृत्तित्व-' मात्रोक्तौ घटेऽतिव्याप्तिः; अतः 'साध्याभाववद्' इत्युक्तम् । 'साध्याभाववत्त्व-' मात्रोक्तौ ह्रदादावतिव्याप्तिः; अतो '-वृत्तित्वम्' उक्तम् । साध्याभाववद्वृत्तित्वस्य धूम-साध्यक[10]-वह्नि-रूप-हेतौ सत्त्वाल्लक्षण-समन्वयः ॥ (ii) असाधारणो लक्ष्यः । असाधारणत्वं लक्ष्यताऽवच्छेदकम् । 'सर्व-[11]सपक्ष-वृत्ति-शून्यत्वं' लक्षणम् । 'सपक्ष-वृत्ति-शून्यत्व'-मात्रोक्तौ यत्किञ्चित्सपक्ष-वृत्ति-शून्यत्वस्य साधारणेऽपि सत्त्वादतिव्याप्तिः; अतः[12] 'सर्व-सपक्ष-' इत्युक्तम्; सर्व-सपक्ष-वृत्ति-शून्यत्वस्य [13]तत्राभावान्नातिव्याप्तिः । एवं च नित्यत्व-साध्यक-शब्दत्व-रूप-हेतौ निश्चित-साध्यवत्परमाण्वादि-वृत्ति-शून्यत्वस्य सत्त्वाल्लक्षण-समन्वयः ॥ (iii) अनुपसंहारी लक्ष्यः । अनुपसंहारित्वं लक्ष्यताऽवच्छेदकम् । 'अन्वय-दृष्टान्त-शून्यत्वे सति व्यतिरेक-दृष्टान्त-शून्यत्वं' लक्षणम् । 'अन्वय-दृष्टान्त शून्यत्व'-मात्रोक्तौ केवल-व्यतिरेकिण्यतिव्याप्तिः; अतो 'व्यतिरेक-दृष्टान्त-शून्यत्वम्; तत्र व्यतिरेक-दृष्टान्त-शून्यत्वा-[14]भावान्नातिव्याप्तिः । [15]व्यतिरेक-दृष्टान्त-शून्यत्व-' मात्रोक्तौ केवलान्वयिन्यतिव्याप्तिः; अतः 'अन्वय-दृष्टान्त-शून्यत्वम्' उक्तम् । तत्रान्वय-दृष्टान्त-शून्यत्वाभावान्नातिव्याप्तिः । एवं च[16] 'सर्वमभिधेयं प्रमेयत्वात् ।' इत्यत्र प्रमेयत्व-रूप हेतौ साध्याभाव-रूपानित्यत्व-निरूपित व्याप्ति-सत्त्वाल्लक्षण-समन्वयः ॥ ४७ ॥

(२.१६ बुद्धि-गुण-विवरणे २ विरुद्ध हेत्वाभास-लक्षणम्)

**(२.१६. ii. क. आ. २) साध्याभाव-व्याप्तो हेतुर्=विरुद्धः । यथा —'शब्दो नित्यः, कृतकत्वात्' । इति । कृतकत्वं हि नित्यत्वाभावेन=अनित्य-**

पाठः । यथा-धृतस्तूचितः प्रतिभातीति कल्पितः ॥ ६. अस्मत्कोषे "०त्विद्धे०" इत्यस्ति ॥ ७. अस्मत्कोषे "अमेय०" इति ॥ ८. अस्मत्कोषे "व्यतिरेकि-दृष्टान्तत्व-मन्वयि-सद्वृत्तौ" इत्यस्ति ॥ ९. अस्मत्कोषे "०रपि व्याप्तिर्भूया" ॥ १०. स०१-३ : "धूम-साध्यक०" इति, स०४ : "धूमस्य साध्यक०" इति, स०५ : "धूम साधक०" इति ॥ ११. स०४ कोषेऽत्र "विपक्ष-" इत्यप्यस्ति । स०१-३, ५ कोषेषु नास्ति । विपक्ष-वृत्ति-शून्यत्वस्यात्राग्रेऽव्याख्यातत्वादत्रैतन्नास्त्येवेति प्रतिभाति । गत-पृष्ठे २ टिप्पणी द्रष्टव्या ॥ १२. स०१-४ : नास्तीदम् ॥ १३. स०४ : "तत्रा० शून्यत्वस्य" इति नास्ति ॥ १४. स०३ : "त्वा" नास्ति ॥ १५. स०४ कोषे "व्यति० न्यति-व्याप्तिः;" इति ग्रन्थो नास्ति, स०५ कोषे च "व्यतिभावा० न्नातिव्याप्तिः ।" इति ग्रन्थो नास्ति ॥ १६. स०३, ५ कोषयोरेवेदम् ॥

त्वेन व्याप्तम् ॥ ४८ ॥

(बाल-प्रबोधिनी) विरुद्धं लक्षयति 'साध्याभाव'-इति। अभाव-व्याप्तत्वं[1] सर्वत्र, साध्य-व्याप्तत्वं[1] च सद्धेतौ वर्तत इत्युभयत्रातिव्याप्त्यभावाय[2] 'साध्याभाव-व्याप्ते हेतुः' इत्युक्तम्। उदाहरति "यथा—शब्द०' " इति। कृतकत्वात्='कार्यत्वाद्' इत्यर्थः। 'यत्र-तत्र घटादौ कार्यत्वम्, तत्र-तत्र नित्यत्वाभावः।' इति व्याप्तिर्ज्ञेया ॥

(उपन्यासः) विरुद्धो लक्ष्यः। विरुद्धत्वं लक्ष्यताऽवच्छेदकम्। 'साध्याभाव-व्याप्तिमत्त्वं[3]' लक्षणम्। अस्ति चेदं लक्षणम्[4]—-शब्द-पक्षक-नित्यत्व-साध्यक-कृतकत्व-रूप-हेतौ साध्याभाव-रूपानित्यत्व-निरूपित-व्याप्ति-सत्त्वाल्लक्षण-समन्वयः ॥४८॥

(२ १६ बुद्धि-विवरणे ३सत्प्रतिपक्ष-हेत्वाभास-लक्षणम्)

**(२.१६. ii क. आ ३) यस्य[1] साध्याभाव-साधकं हेत्वन्तरं विद्यते[2], स सत्प्रतिपक्षः। यथा—'(१) शब्दो नित्यः, श्रावणत्वात्, शब्दत्ववत्।' ='(२) शब्दोऽनित्यः, कार्यत्वाद्, घटवत्।' इति[3] ॥ ४९ ॥**

(बाल-प्रबोधिनी) सत्प्रतिपक्षं लक्षयति 'साध्या०' इत्यादि। 'सन्=साधुः+प्रतिपक्षः=साध्याभाव-साधको द्वितीय हेतुर्यस्य=स्थापनाऽनुमानस्य, स सत्प्रतिपक्षः।' इत्यर्थः। स्थापनाऽनुमानमुदाहरति 'यथा—' इति। श्रावणत्वात्='श्रवण-विषयत्वात्' इत्यर्थः। प्रतिपक्षानुमानमुदाहरति 'शब्दोऽनित्यः०' इति ॥

(उपन्यासः) सत्प्रतिपक्षो लक्ष्यः। सत्प्रतिपक्षत्वं लक्ष्यताऽवच्छेदकम्। 'स्व-साध्य-विरुद्ध-साध्याभाव-साधक[4]-हेत्वन्तरकत्व' लक्षणम्। यथा—'शब्दोऽनित्यः, श्रावणत्वात्' इत्यत्र नित्यत्वाभाव=अनित्यत्व-साधक-[5]कृतकत्व-रूप-हेत्वन्तरकत्वस्य सत्त्वात्[6]। [7]एवमनित्यत्वाभाव[8]-रूप-नित्यत्व-साधक-[6]श्रावणत्व-रूप-हेत्वन्तरकत्व-

---

१. उभयत्रास्मत्कोषे "व्याप्तित्वं" इत्यस्ति ॥ २. स० कोषे "०प्तेरभा०" इत्यस्ति ॥ ३. स०४ कोषे "मत्त्वं" नास्ति ॥ ४. इदं स०५ कोष एवास्ति ॥ ४८ ॥

१. सिद्धान्तचन्द्रोदय-बालप्रबोधिनी-वाक्यवृत्ति-पदकृत्येषु "यस्य" इति न तावदादौ, अपि तु "हेत्वन्तरम्" इत्यतः पश्चादस्ति। बोडास आधारयोर्द्वयोः संस्करणयोः, गुरुप्रसाद-संस्करणे चापि तथैव। न्यायबोधिन्याः विभिन्नयोः संस्करणयोर्भिन्नः पाठः—अस्मत्कोषे, बोडास्संस्करणे च प्रतीकं "यस्य" इत्यस्ति, शास्त्रिगलगुरुप्रसाद-संस्करणयोश्च 'सत्प्रतिपक्ष-'लक्षणोत्थानिकैव नास्ति; दूर आस्तां प्रतीकम्। दीपिकाया अस्मत्कोषे, बोडाश्शास्त्रिगलोः संस्करणयोः, दीपिका-प्रकाशस्यास्मदीये कोषे शास्त्रिगलसंस्करणे च, निरुक्तौ, नृसिंह-प्रकाशिकायां चापि प्रतीकं "यस्य" इत्येवास्ति। अतोऽस्माभि-'बाधित-'हेत्वाभास-प्रकरणेऽपि "यस्य" इति वाक्यादावेव वक्ष्यते। अतोऽस्माभि-रप्यत्रैव निरधारि ॥ २. "विद्यते" इति बोडास आधार एकस्मिन्त्संस्करणे, गुरुप्रसाद-संस्करणे च नास्ति। पद-कृत्ये, दीपिका-प्रकाशे च तु व्याख्यातम् ॥ ३. "इति" इति बोडास्संस्करण एव। स्पष्ट-प्रतिपत्तिकरमित्यस्माभिरपि गृहीतम् ॥ ४. स० ४ कोषे "भावसक-" इत्यस्ति ॥ ५. स०२कोष एव "कृतकत्व-रूप" इत्यस्ति ॥ ६. स०५कोषे "हेत्वन्तरत्वात्।" इति नास्ति ॥ ७. स०१,४ कोषयोः "एवमप्यनि०" इति, स०

स्य[10] कृतकत्व-[11]रूप-हेतौ सत्त्वाल्लक्षण-समन्वयः ।। ४९ ।।

(२.१६ बुद्धि-विवरणे ४ असिद्ध-हेत्वाभास-लक्षणम्)

(२ १६. ii. क आ. ४) **असिद्धस्त्रि-विधः— i) आश्रयासिद्धः, (ii) स्वरूपासिद्धो, (iii) व्याप्यत्वासिद्धश्चेति । (i) आश्रयासिद्धो यथा—गगनारविन्दं सुरभि, अरविन्दत्वात्, सरोजारविन्दवत् । अत्र गगनारविन्दम् = आश्रयः; स च नास्त्येव । (ii) स्वरूपासिद्धो यथा—शब्दो गुणः[1], चाक्षुषत्वात्[2] । अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात् । (iii) सोपाधिको[3] = व्याप्यत्वासिद्धः । साध्य-व्यापकत्वे सति साधनाव्यापकत्वम् = [4]उपाधित्वम् । साध्य-समानाधिकरणात्यन्ताभावाप्रतियोगित्वं = साध्य-व्यापकत्वम् । साधनवन्निष्ठात्यन्ताभाव-प्रतियोगित्वं = साधनाव्यापकत्वम् । यथा[5] - 'पर्वतो धूमवान्, वह्निमत्त्वात्[6] ।' इत्यत्रार्द्रेन्धन-संयोग उपाधिः । [7]'यत्र धूमः,**

५कोषे "एवं नि०" इति पाठः । ८ स०४कोषे "भावानित्य०" इति पाठः ।। ९. स० ४ कोषे अत्र पुराऽऽगतं "हेत्वन्त० भाव" इति पुनरुक्तमस्ति ।। १०. स०५कोषे "हेत्वन्तरत्वस्य" इत्यस्ति ।। ११. स०५कोषे "रूप" इति नास्ति ।। ४९ ।।

१. एकस्मिन् (Q) आधारे "गुणः" इत्यस्य स्थाने "अनित्यः" इति पाठ इति बोडाः । उपन्यासे, निरुक्तौ च 'गुणः" इत्येव धृतं व्याख्यात चेति "अनित्यः" इति नोपादेयम् ।। २. बोडासः Q आधार-ग्रन्थे, शास्त्रिगलसंस्करणे चेतः पश्चाद् "रूपवत्" इत्यप्यस्ति । निरुक्त्युपन्यासयोर्दृष्टान्तोऽयं न धृतो, न च व्याख्यातः । अन्य-टीकासु मूलाक्षराणि न धृतानि, आशयस्तु भिन्नया शैल्या यथा-यथं वर्णितः ।। ३. षट्स्वाधारेष्वत्र 'सोपाधिको हेतुः" इति पाठ, इति बोडाः । कुप्पूस्वामि-संस्करणेऽपि तथैव पाठः । निरुक्तौ 'उपाधि-विशिष्टो यो हेतुः, स एव व्याप्यत्वासिद्धः ।" इत्यत्र "हेतुः" इति पदं मौलिकमिति वा, व्याख्योपात्तमिति वेति न स्पष्टम् । तस्मादिदमत्र सन्दिग्धम् ।। ४. "०व्यापक "उपाधिः" इति बोडास्स्वीकृतः पाठः । तस्य पञ्चस्वाधारेषु "०व्यापकत्वमुपाधिः" इति, एकस्मिंश्च "०व्यापकत्वमुपाधित्वम्" इति पाठः । शास्त्रिगलगुरुप्रसाद-कुप्पूस्वामि संस्करणेषु "०त्वमुपाधिः" इति पाठः । नृसिंह-प्रकाशिकायां ("०प्रतियोगिताऽवच्छेदक-धर्मवत्त्वमुपाधि-लक्षणमित्यर्थः ।" इत्यत्र) "त्व"प्रत्ययेनैव व्याख्यातमिदम् । साध्य-व्यापकत्व-साधनाव्यापकत्वयोर्वर्णन शैल्या—लक्ष्य-लक्षणयोरुभयोरेव "त्व-"घटिततया—'व्यापकत्वमुपाधित्वम्" इत्येव पाठः सूच्यते । बोडास एकेनाधारेण प्रमाणितश्चाप्ययम् । इत्यस्माभिः स एव धृतः ।। ५. बोडास्कुप्पूस्वामिसंस्करणयोः "यथा" नास्ति, शास्त्रिगलसंस्करणे कोष्ठकस्थम्, गुरुप्रसाद-संस्करणे च स्पष्टमस्ति । निरुक्ति-नृसिंहप्रकाशिकयोरुदाहरण-प्रतीकं "यथेति" इति धृतम्, बालप्रबोधिन्यां च "पर्वत इति" धृतम् ।। ६. शास्त्रिगला "वह्नेः" इति धृतम् उपन्यासेऽपि तावदिदमेवोद्धृतम् । परं निरुक्तौ "अत्र पर्वतः पक्षः, धूमवत्त्वं साध्यम्, वह्निमत्त्वं हेतुः ।" इति यथा-धृत-पाठ[illegible] व्याख्यास्ति ।। ७. बोडा-गुरुप्रसाद-संस्करणयोरत्र "तथाहि"

तत्रार्द्रेन्धन-संयोगः ।' इति साध्य-व्यापकता । 'यत्र-वह्निः, तत्रार्द्रेन्धन-संयोगो[८] नास्ति; अयो-गोलक आर्द्रेन्धन-संयोगाभावात् ।' इति साधना-व्यापकता[९] । एवं साध्य-व्यापकत्वे सति साधनाव्यापकत्वादार्द्रेन्धन-संयोग =उपाधिः । सोपाधिकत्वाद्वह्निमत्त्वं=व्याप्यत्वासिद्धम् ॥ ५० ॥

(बाल-प्रबोधिनी) असिद्धं विभजते 'असिद्धस्त्रि-विधः०' इति । (i) हेत्वाश्रयः =पक्षः, स=आश्रय[१०] एवासिद्धो यस्य, स हेतुः=आश्रयासिद्धः । तमुदाहरति "यथा —'गगनारविन्दम्' " इति । आश्रयासिद्धत्वं स्पष्टयति 'अत्र०' इति—'अस्मिन्ननुमाने' इत्यर्थः ॥ (ii) स्वरूप एवासिद्धः=पक्षे अवर्तमानो यस्य, स हेतुः=स्वरूपासिद्धः । तमुदाहरति 'स्वरूपासिद्धो यथा——' इति ॥ (iii) व्याप्यत्वासिद्धं लक्षयति 'सोपाधिक०' इति । उपाधिं लक्षयति 'साध्य-' इत्यादि । 'प्रत्येकं तु विशेषणमनुपाधिषु प्रमेयत्वा-प्रमेयत्वादिष्वप्यस्ति ।' इति विशेषण-द्वयम् । साध्य-व्यापकत्वं लक्षयति 'साध्य-समा-नाधिकरण०' इति । स्व-कारणेऽत्यन्ताभावाप्रतियोगित्वं कार्य-मात्रस्य वर्तते, तत्रा-तिव्याप्त्यभावाय 'साध्य-समानाधिकरणम्' इत्युक्तम् । साध्य-[११]वृत्तिर्यस्यात्यन्ता-भावो नास्ति——'यत्र-यत्र साध्यम्, तत्र-तत्र नियमेन वर्तमानः ।' इति यावत् । साधनाव्यापकत्वं लक्षयति 'साधनवन्निष्ठ०' इति । 'क्वचिदत्यन्ताभाव-प्रतियोगित्वं सर्वस्याप्यस्ति ।' इति तद्व्यावृत्त्यर्थं 'साधनवन्निष्ठ' इत्युक्तम् । 'साधनवति यस्य क्वचिदप्यत्यन्ताभावोऽस्ति ।' इत्यर्थः । सोपाधिकमुदाहरति 'पर्वत०' इति । उपाधि-माह 'आर्द्र०' इति । उपाधेः साध्यव्यापकत्वमाह 'यत्र धूम०' इति । साधनाप्यापक-त्व[१२]माह 'यत्र वह्नि०' इति । 'नास्ति' इति[१३]——'नियमो नास्ति' इत्यर्थः । 'अयो-गोलके='तप्त-लोहे' इत्यर्थः । सोपाधिकं[१४] व्याप्यत्वासिद्धमुपसंहरति 'एवम्०' इत्यादि ॥

(उपन्यासः) 'असिद्धस्त्रि-विध'[१५] इति विभागोक्तिः । (i) आश्रयासिद्धो लक्ष्यः । आश्रयासिद्धत्वं लक्ष्यताऽवच्छेदकम् । 'पक्षे पक्षताऽवच्छेदकाभाववत्त्वं' लक्षणम् । 'गगनारविन्दं सुरभि' इत्यत्र गगनारविन्दत्वस्याभावाल्लक्षण-समन्वयः ॥ (ii) स्व-रूपासिद्धो[१६] लक्ष्यः । स्वरूपासिद्धत्वं[१७] लक्ष्यताऽवच्छेदकम् । 'पक्षे हेत्वभाववत्त्वं' लक्षणम् । अस्ति चेदं लक्षणम्[१८]——'शब्दो गुणश्चाक्षुषत्वात् ।' इत्यत्र शब्द-रूप-पक्षे

---

शास्त्रिगलसंस्करणयोरपि
इत्यप्यस्ति । कतिपय-कोषेष्विदं नास्तीति बोडाः । कुप्पूस्वामि-शास्त्रिगलसंस्करणयोरपि इत्यप्रामा-
नास्ति । बाल-प्रबोधिन्यां, निरुक्ति-नृसिहप्रकाशिकयोरपीदं न धृतम् । इत्यप्रामा-
णिकमेवैतत् । स्पष्ट-प्रतिपत्ति-करत्वात्तु मूले प्रविष्टः प्रतीयते ॥ ८. शास्त्रिगलसं-
स्करणे "इति" अप्यस्ति ॥ ९. बोडासः पञ्चस्वाधारेषु शास्त्रिगलसंस्करणे च
"इति० कता" नास्ति ॥ १०. अस्मत्कोषे "आश्रयोऽसिद्धो" ॥ ११. अस्मत्कोषे
"वृत्ति य०" इति, स० कोषे च "वति य०" इत्यस्ति ॥ १२. अस्मत्कोषे "त्व" इति
नास्ति ॥ १३. स० कोषे "नास्ति इति" न वर्तते ॥ १४. अस्मत्कोषे "०क-व्या०"
इत्यस्ति ॥ १५. स०५ : "विधेति" ॥ १६. स० [illegible] "द्धि" इति । स०३ : "धि

चाक्षुषत्व-रूप-हेत्वभाव-सत्त्वात्, तत्प्रतियोगित्वस्य च[१९] चाक्षुषत्वे सत्त्वाल्लक्षण-समन्वयः ॥ (iii) व्याप्यत्वासिद्धो[२०] लक्ष्यः । व्याप्यत्वासिद्धत्वं लक्ष्यताऽवच्छेदकम् । 'सोपाधिकत्वं' लक्षणम् । अस्ति चेदं लक्षणम्[१८]--'धूमवान्वह्निः ।' इत्यत्र वह्नि-रूप-हेतौ धूमाधिकरण-वृत्त्यत्यन्ताभावा[२१]प्रतियोगित्वस्य [१९]च [२२]वह्न्यधिकरण-[२३]वृत्त्यत्यन्ताभाव-प्रतियोगित्वस्य चार्द्रेन्धन-संयोग-रूपोपाधौ सत्त्वात् तादृशोपाधिमत्त्वस्य[२४] वह्नि-रूप-हेतावव्याप्यत्व[२५]सम्बन्धेन सत्त्वाल्लक्षण-समन्वयः ॥ ५० ॥

(२.१६ बुद्धि-विवरणे ५ बाधित-हेत्वाभास-लक्षणम्)

**(२.१६. ii. क. आ. ५) यस्य साध्याभावः प्रमाणान्तरेण[१] निश्चितः, स बाधितः । यथा--वह्निरनुष्णः, पदार्थत्वात्[२] । अत्र 'अनुष्णत्वं साध्यम्; तदभावः=उष्णत्वं स्पार्शन-प्रत्यक्षेण[३] गृह्यते ।' इति बाधितत्वम् ॥**

**॥ व्याख्यातमनुमानम्[४] ॥ ५१ ॥**

(बाल-प्रबोधिनी) बाधितमाह 'यस्य साध्याभाव०' इति । उदाहरति "यथा--'वह्नि०' " इति । स्पष्टम् ॥

---

इति, स०४ : "द्धोर्ल०" इति पाठः ॥ १७. स०३ : "०धि" ॥ १८. "लक्षणम्" इति स०५कोष एव ॥ १९. स० १-२,४ : नास्तीदम् ॥ २०. स० ४ : "द्धोर्ल०" ॥ २१. स०५ : "भाव-प्र०" ॥ २२. स०५ : "वह्नि० पाधिमत्त्वस्य" नास्ति ॥ २३. स०३ : "वृत्त्यन्ता०" ॥ २४. स०२ : "स्यव" इति हरितालिका-लिप्तम्, "ह्नि० तौ" इति च मसी-लिप्तम्, "अ" इति चास्पष्टम् ॥ २५. स०१ : "त्वं स०" इति, स०२ : "त्वसं स०" इति ॥ ५० ॥

१. कतिपय-संस्करणेष्वत्र "पक्षे" इत्यधिकम् । श्री-शास्त्रिगलगुरुप्रसाद-संस्करणयोन्यायि-बोधिन्यामत्रेदमस्ति--" 'यस्य=हेतोः साध्याभावः=साध्य-बाधः प्रमाणान्तरेण=प्रत्यक्ष-प्रमाणेन पक्षे निर्णीतः, स बाधितः ।' इत्यर्थः" । अस्मत्कोषे बोडास्संस्करणे चात्र "पक्षे" इति नास्ति । वाक्य-वृत्तौ । "निश्चितः' इति 'पक्षे' इत्यादिः ।' इति कदाचित् "पक्षे" इत्यस्य शेषत्वाभिप्रायेणैव स्यात् । रामरुद्रीयोपन्यासयोर्मूलाक्षराणि न व्याख्यातानीति तत्र व्याख्यातं "पक्षे" इति पदं मौलिकमेवेति न स्पष्टम् । नृसिंह-प्रकाशिकायां "प्रमाणान्तरेण निश्चितः' इति" प्रतीकं दत्त्वा "'पक्षे' इति शेषः ।" इति स्पष्टमुक्तम् । निरुक्तावपि "पक्षे" इति न व्याख्यातम् । तस्मादस्माभिरिदममौलिकमेवामानि ॥ २. 'एकं (K) आधारं विहायेतरत्र सर्वत्र "द्रव्यत्वात्" इति पाठः ।' इति बोडाः । शास्त्रिगलगुरुप्रसाद-संस्करणयोरपि "द्रव्यत्वात्" इत्येव धृतम् । निरुक्ति-नृसिंहप्रकाशिकयोरत्र स्पष्टतया "पदार्थत्व-'रूप-हेतुरेव" व्याख्यायीति यथा-धृत-पाठः प्रमाणम् ॥ ३. शास्त्रिगलसंस्करणे "त्वाच-प्रत्यक्षेण" इति पाठोऽस्ति । सिद्धान्त-चन्द्रोदये "स्पर्शनेन" इति पाठो व्याख्यातः । बोडाश्चात्रान्यानपि कतिचन पाठान्दर्शयित्वा यथा-[illegible] यकार्षीत् । निरुक्ति-नृसिंहप्रकाशिकयोरपि यथा-धृत-पाठ एव व्याख्यातः । इति स एव प्रमाणम् ॥ ४. बोडास्संस्करणे वाक्यमिदं

॥ व्याख्यातमनुमानम् ॥

(उपन्यासः) बाधो लक्ष्यः । बाधत्वं लक्ष्यतावच्छेदकम् । 'पक्षे साध्याभाव-वत्त्व' लक्षणम् । अस्ति चेदं लक्षणम्[५]—'ह्रदो वह्निमान्, धूमात्।' इत्यत्र 'ह्रद-'रूप-पक्षे वह्न्यभाव; तद्वत्त्वं[६] च 'धूम-'रूप-हेतावेक-ज्ञान-विषयत्व[७]-सम्बन्धेन सत्त्वाल्लक्षण-समन्वयः ॥

॥[८] इत्यनुमानोपन्यासः ॥ ५१ ॥

(२.१६ बुद्धि-विवरणे यथार्थानुभव-तृतीय-भेद-करणस्योपमानस्य लक्षणम्)

**(२.१६.ii.क.इ) उपमिति-करणम् = उपमानम् । सञ्ज्ञा-सञ्ज्ञि-सम्बन्ध-ज्ञानम् = उपमितिः । तत्करणं = सादृश्य-ज्ञानम्[१] । तथाहि—(i) कश्चिद् 'गवय-'[२]पदार्थमजानन् (ii) कुतश्चिद्—आरण्यक-पुरुषाद्—'गो-सदृशो = गवयः ।' इति श्रुत्वा वनं गतो (iii) वाक्यार्थं[३] स्मरन् गो-सदृशं पिण्डं पश्यति; (iv) तदनन्तरम् '[४]असौ गवय-पद[२]-वाच्यः ।' इत्युपमिति-रुत्पद्यते ॥**

**॥ व्याख्यातमुपमानम्[५] ॥ ५२ ॥**

(बाल-प्रबोधिनी) उपमानं लक्षयति 'उपमिति०' इति । करण-मात्रे उपमिति-[६]ज्ञाने चातिव्याप्तिर्मा भूद्, इति पद-द्वयम् । उपमिति-लक्षणमाह 'सञ्ज्ञा०'

---

नास्ति । नृसिंह-प्रकाशिकायान्तु मौलिकत्वेन धृतम् ॥ ५. स०१-२,४ कोषेषु "लक्षणम्" इति नास्ति ॥ ६. स०१,३-४ : "तत्कत्वं" ॥ ७ स०१-२,४ : "०त्वस्य स०" ॥ ८. स० २कोष इतः प्राक् "श्री-राम ॥" इत्यपि । स०५ : "इत्युपमानो०" इत्यपपाठः ॥५१ ॥

१. इतोऽग्रे बोडासा "अतिदेश-वाक्यार्थ-स्मरणमवान्तर-व्यापारः ।" इति पाठो दत्तो, यस्तस्य त्रिष्वेवाधारेषु नास्ति । अयमाशयः "अतिदेश-वाक्यार्थ-स्मरणं = व्यापारः ।" इत्यभिप्रायेण सिद्धान्त-चन्द्रोदये, न्याय-बोधिन्यां, पद-कृत्ये चोपमानस्य समुच्चिताशय-विवरणे दत्तः । टीकासु नेदं वाक्यं मौलिकत्वेन प्रतीकतया धृतं, व्याख्यातं वा । इत्यमौलिकमेवैतत्प्रतीयते । एकस्मिन्नाधारेऽनुच्छेद-शेषो नास्तीति बोडाः । परमयं टीकासु धृतो व्याख्यातश्चेति मौलिक एव ॥ २ बोडासाऽत्र "पद-"स्थाने "शब्द"-शब्दो धृतः । टीकासु प्रायेण "पद-"शब्द एव धृतः। नृसिंह-प्रकाशिकायां तु "शब्द-" इत्येव प्रतीके, व्याख्यायां च धृतम् ॥ ३. "वाक्यार्थं...पश्यति" इति वाक्यं शास्त्रिगला रामरुद्रानुसारेण "गो-सदृश-पिण्डं पश्यन्वाक्यार्थं स्मरति ।" इति रूपेण परिवर्तितम् । टीकाऽन्तरे तु यथा-धृतैव पदावल्यनेनाभिप्रायेण व्याख्याता धृता चेत्यमौलिकमेतत् ॥ ४. बोडासकुप्पूस्वामिनौ तु "असौ" इति धरतः । राम-रुद्रीये, पद-कृत्येऽपि तथा । प्रकृतः (सम्मुखस्थः) पिण्ड-विशेषो 'गवय-'पद-वाच्य इत्याशयानुकूलतया दूरस्थ-परामर्शक-"असौ-"पदापेक्षया "अयं-"पदमेव समीचीनम् । निरुक्ति-नृसिंहप्रकाशिकयोः, सिद्धान्त-चन्द्रोदये च "अयं-" पदमेव धृत, व्याख्यातं च ॥ ५. बोडा-ससंस्करणे नेदम् । अन्यत्र टीकासु सर्वत्रास्ति ॥ ६. स०२कोषे "ज्ञाने" नास्ति ॥

इति । 'तत्करणम्' इत्यादि संस्पष्टम् ॥

॥ व्याख्यातमुपमानम् ॥

(उपन्यासः) उपमानं लक्ष्यम् । उपमानत्व लक्ष्यताऽवच्छेदकम् । 'उपमिति-करणत्वं' लक्षणम् । 'करणत्व-'मात्रोक्तौ कुठारेऽतिव्याप्तिः; अत[7] 'उपमितिकरणत्वम्' उक्तम्; उपमिति-करणत्वस्य तत्राभावान्नातिव्याप्तिः । 'उप=समीपे मिति-करणम्' इति व्युत्पत्त्योपमिति-करणत्वस्य[8] चक्षुरादावपि सत्त्वादतिव्याप्तिः; अत 'उपमितित्व-जात्यवच्छिन्न-कार्यता-निरूपित-कारणता-शालित्वम् ।' [9]इति वक्तव्यम्; तस्य चक्षुरादावभावान्नातिव्याप्तिः । 'उपमितित्व'-जाति-सिद्धिस्तु 'उपमिनोमि' इत्याकारकानुव्यवसायादेवेति [10]बोध्यम् ॥

उपमितिर्लक्ष्या । उपमितित्वं लक्ष्यताऽवच्छेदकम् । 'सञ्ज्ञा-सञ्ज्ञि-सम्बन्ध-ज्ञानत्वं[11]' लक्षणम् । 'ज्ञानत्व-' मात्रोक्तौ अनुमित्यादावतिव्याप्तिः; तत्र ज्ञानत्वस्य सत्त्वात्; अतः[12] 'सम्बन्ध-ज्ञानत्वम्' उक्तम् । 'सम्बन्ध-ज्ञानत्व-' मात्रोक्तौ संयोग-ज्ञानेऽतिव्याप्तिः; अतः 'सञ्ज्ञा-सञ्ज्ञि-सम्बन्ध-ज्ञानम्' इत्युक्तम् । 'सञ्ज्ञा' नाम वाचकः [13]शब्दः । 'सञ्ज्ञी' नाम अर्थः । अनयोः सम्बन्धः=वाच्य-वाचक-सम्बन्धः । 'तज्ज्ञानम्' इति 'शक्ति-ज्ञानम्' इति यावत् ॥

॥ इत्युपमानोपन्यासः ॥ ५२ ॥

(२.१६ बुद्धि-विवरणे यथार्थानुभव-प्रसङ्गे शाब्दानुभव-लक्षणम्)

**(२.१६ ii.क. ई) आप्त-वाक्यं=शब्दः । आप्तस्तु[1]=यथाऽर्थ-वक्ता । वाक्यं[2]=पद-समूहः । यथा—'गामानय[3] ।' इति । शक्तं=पदम् । 'अस्मात्पदादयमर्थो बोद्धव्यः ।' इतीश्वर-सङ्केतः=शक्तिः । (i) आकाङ्क्षा, (ii) योग्यता, (iii) सन्निधिश्च वाक्यार्थ-ज्ञाने[4] हेतुः । (i) पदस्य पदान्तर-व्यतिरेक-प्रयुक्तान्वयाननुभावकत्वम्=आकाङ्क्षा । (ii) अर्थाबाधो=योग्यता ।**

---

७. स०२कोष एवेदम् ॥ ८. स०५ : "त्वं" । स०२-४ : "च" अप्यस्ति ॥ ९. स०५ : नेदम् ॥ १०. स०४ : "वाध्यम्" ॥ ११. स०१,४ : "ज्ञानं" ॥ १२. स०५ : "अस०" ॥ १३. स०५ : नास्ति ॥ ५२ ॥

१. रामरुद्रीये "तु-"स्थाने "च" अस्ति । नृसिह-प्रकाशिकायां "तु" इत्येव धृतं व्याख्यातञ्च । अन्यत्रापि "तु" इत्येव धृतम् ॥ २. शास्त्रिगलसंस्करणे मूले, निरुक्तौ च "तु" अपि धृतम्; अत्रार्थे निरुक्ति-व्याख्यायाः स्वरसोऽपि दृश्यत इव। रामरुद्रीये "तद्वाक्यम्" इति धृतं, व्याख्यातं च ॥ ३. 'एकस्मिन्नाधारे नेदं वाक्यम-परस्मिश्चेतोऽग्रे "शुक्लां दण्डेन" इत्यपि ।' इति बोडाः । शास्त्रिगलसंस्करणेऽपि नेदं वाक्यम् । नृसिह-प्रकाशिकायां तु यथा-धृत-मात्रमेव धृतं, व्याख्यातञ्च । टीकाऽन्तरेषु 'स्पष्ट-मिदम्', इति न व्याख्यातं स्यात् ॥ ४. कुप्पूस्वामि-गुरुप्रसाद-संस्करणयोरेवायं पाठः । अन्यत्र नृसिह-प्रकाशिकायां तु "ज्ञान-हेतुः" इति पाठः । निरुक्ति-न्याय-बोधिन्योर्यथा-धृत-पाठ एव व्याख्यातः । दीपिकाप्यत्रार्थं एवानुकूला । टीकाऽन्तराणि

(iii) पदानामविलम्बेनोच्चारणं=सन्निधिः । आकाङ्क्षाऽऽदि-रहितं वाक्यमप्रमाणम्[५] । यथा—(i) 'गौरश्वः, पुरुषो, हस्ती ।' इत्यप्रमाणम्[६], आकाङ्क्षा-विरहात् । (ii) 'अग्निना सिञ्चेद् ।' इत्यप्रमाणम्[६], योग्यता-विरहात् । (iii) प्रहरे-प्रहरेऽसहोच्चारितानि 'गाम्', 'आनय' इत्यादि-पदान्यप्रमाणम्[६], [७]सान्निध्याभावात् ॥ वाक्यं द्वि-विधम्—(i) वैदिकं, (ii) लौकिकं च । (i) वैदिकमीश्वरोक्तत्वात्सर्वमेव[८] प्रमाणम् । (ii) लौकिकन्त्वाप्तोक्तम्[९] प्रमाणम्, अन्यदप्रमाणम् ॥ वाक्यार्थ-ज्ञानं=शाब्द-ज्ञानम् । तत्करणं=शब्दः[१०] ॥ ५३ ॥

(बाल-प्रबोधिनी) शब्दं लक्षयति 'आप्त०' इति । अनाप्त-वाक्यस्याभासत्वात्तद्व्यावृत्त्यर्थम् 'आप्त-' इत्युक्तम् । आप्तमाह 'यथार्थ०' इति । वाक्यमाह 'वाक्यम्०' इति । मृदादि-समूहे, पद-मात्रे चातिव्याप्ति-निरासाय 'पद-समूह' इति । पदमाह 'शक्तम्' इति । [११]शक्तिमाह 'अस्माद्०' इति । वाक्यार्थ-ज्ञान हेतूनाह '(i) आकाङ्क्षा०' इति । (i) आकाङ्क्षामाह 'पदस्य०' इति । 'पदस्य पदान्तरं विना स्वान्वय-प्रतीत्यजनकत्वम् ।' इत्यर्थः । (ii) योग्यतामाह 'अर्थाबाध' इति । (iii) सन्निधिमाह 'पदानाम्०' इति । 'यत्र-यत्राकाङ्क्षाऽऽद्यभावस्, तत्र-[१२]तत्र वाक्यार्थ-ज्ञानं न जायते ।' इति व्यतिरेकेण हेतुत्वं स्पष्टयति '(i) आकाङ्क्षाऽऽदि०' इति । स्पष्टम् ॥ वाक्यावान्तर-भेदमाह 'वाक्य हि[१३] द्वि-विधम्' इत्यादि । स्पष्टम् ॥ शाब्द-ज्ञानं, तत्करणं चोपसंहरति 'वाक्यार्थ० इति ॥

(२.१६.ii क) यथाऽर्थानुभवो निरूपितः ॥

(उपन्यासः) [१४]शब्दो लक्ष्यः । शब्दत्वं लक्ष्यताऽवच्छेदकम् । 'आप्त-वाक्य-

---

मौनमाकलयन्ति ॥ ५. शास्त्रिगलसंस्करणे "वाक्यं न प्रमाणम् ।" इति पाठः । नृसिंह-प्रकाशिकायाम्, इतोऽग्रे मूलेऽपि च 'अन्यदप्रमाणम्' इति "अप्रमाणम्" प्रयोग एव यथा-यथन्धृतो व्याख्यातश्च ॥ ६. चतुर्ष्वपि संस्करणेषु सर्व-स्थलेषु "इति न प्रमाणम् ।" इति पाठः; स चाग्रे मूले "अन्यदप्रमाणम्" इत्यत्र "अप्रमाणम्" इति प्रयोग-शैल्यनुरोधात्, नृसिंह-प्रकाशिकायाम् "अप्रमाणम्" इति वाग्योगस्यैव धृतत्वाद्, व्याख्यातत्वाच्च न प्रमाणम् । टीकान्तरेषु चाक्षराणि न धृतानि, न च व्याख्यातानि ॥ ७. बोडासो द्वयोराधारयोः, कुप्पूस्वामि-संस्करणे च "सन्निध्यभावात्" इति पाठः । ८. शास्त्रिगल् "सर्वमपि" इति पठति । नृसिंह-प्रकाशिकायां तु यथा-धृतमेव धृतः ॥ ९. शास्त्रिगल्तु "आप्त-वाक्यम्" इति धरति । नृसिंह-प्रकाशिकायान्तु "सर्वमेव" इति व्याख्यातम् ॥ नृसिंह-प्रकाशिकायां तु यथा-धृतमेव व्याख्यातम् ॥ १०. शास्त्रिगल्कुप्पूस्वामि-संस्करणयोरितः पश्चाद् "एवं यथाऽर्थानुभवो निरूपितः ।" इत्यधिकम् । परमनेनास्य सङ्गति-प्रदर्शनावसरेऽयमाशयो न्याय-बोधिन्यां निरुक्तो चापि प्रोक्तः । बाल-प्रबोधिन्यां तु [illegible]नुभवो निरूपितः ।" इति मौलिकत्वं न सिध्यति । वचनेन प्रकरणोपसंहारः कृतः ॥ ११. अस्मत्कोषे "शक्त०" ॥ १२. स०कोष एकमेव

त्वं[१५]' लक्षणम् । 'आप्तत्व-'मात्रोक्तौ आप्तेऽतिव्याप्तिः, आप्तत्वस्य तत्र[१६] सत्त्वात्; अतो 'वाक्यत्वम्' उक्तम् । 'वाक्यत्व-'मात्रोक्तौ अनाप्त-वाक्येऽतिव्याप्तिः, तत्र वाक्यत्वस्य सत्त्वात्' ;अत 'आप्तत्वम्' उक्तम् ॥ आप्तो लक्ष्यः । आप्तत्वं लक्ष्यताऽवच्छेदकम् । 'यथार्थ-[१७]वक्तृत्वं' लक्षणम् । '[१८]वक्तृत्व-'मात्रोक्तावनाप्तेऽतिव्याप्तिः;तत्रापि वक्तृत्वस्य[१९] सत्त्वात्; अतो 'यथाऽर्थत्वम्' उक्तम्[२०] । 'यथाऽर्थत्व-'मात्रोक्तौ यथार्थ-ज्ञानेऽतिव्याप्तिः; तत्रापि यथाऽर्थत्वस्य[२१] सत्त्वात्; अतो 'वक्तृत्वम्[२२]' उक्तम् ।

वाक्यं लक्ष्यम्[२३] । वाक्यत्वं लक्ष्यताऽवच्छेदकम् । पद-समूहं' लक्षणम्। 'समूहत्व-[२४]' मात्रोक्तौ [२५]घटादि-समूहेऽतिव्याप्तिः; तत्रापि समूहत्वस्य सत्त्वात्; अतः 'पद-' इत्युक्तम् । 'पदत्व-'मात्रोक्तौ पदेऽतिव्याप्तिः; अतः 'समूहत्वम्' उक्तम् ॥ पदं लक्ष्यम् । पदत्वं लक्ष्यताऽवच्छेदकम् । 'शक्तिमत्त्वं' लक्षणम् ॥ शक्तिर्लक्ष्या । शक्तित्वं लक्ष्यताऽवच्छेदकम् । " 'अस्मात्पदादयमर्थो बोद्धव्यः ।' इतीश्वर-सङ्केतत्वं" लक्षणम् । इच्छा-विशेषेऽतिव्याप्ति-वारणार्थम् '[२६]इति'-शिरस्कान्तम् ।

शाब्द-बुद्धित्वावच्छिन्नं प्रति-(i) आकाङ्क्षा-ज्ञानं, (ii) योग्यता-ज्ञानम्, (iii) आसत्ति-ज्ञानम्[२७]—एतैस्सह-कृत-पद-ज्ञानं[२८] कारणम् । (i) आकाङ्क्षा लक्ष्या । आकाङ्क्षात्वं[२९] लक्ष्यताऽवच्छेदकम् । 'पदस्य[३०] पदान्तराभाव-प्रयुक्त-[३१] शाब्द-बोधाजनकत्वं' लक्षणम् । अस्ति चेदं लक्षणम्—निराकाङ्क्षे[३२] 'गोरश्वः' इत्यादि-वाक्ये " 'गो-' पदोत्तर-'अ०'[३३]-पदाभाव-प्रयुक्त[३४]-गवि या [३५]कर्मता" इति शाब्द-बोधाजनकत्वस्य सत्त्वात् ॥ (i) योग्यता-ज्ञानं लक्ष्यम् । योग्यता-ज्ञानत्वं लक्ष्यताऽवच्छेदकम् । '[३६]अर्थाबाधत्वं' लक्षणम् । अस्ति चेदं लक्षणम्—(क) "पयसा सिञ्चति ।' इत्याकारक-वाक्ये 'पयः-करणकत्व[३७]'-रूपार्थस्य[३८] 'सेक'-रूपार्थे[३९] बाधा-

---

"तत्र" इति ।। १३. "हि" इति मूले नास्ति ।। १४. स०५कोष इतः पूर्वं "गुरवे नमः ॥" इत्यस्ति । स०४ : "शब्दोर्ल०" ॥ १५. स०१ : "०आक्यं ल०" ॥ १६. स०५ : "तत्र" नास्ति ॥ १७. स०४ : "०र्थवक्तव्यं" ॥ १८. स०४ : "०क्त०" ॥ १९. स०४ : "०क्तत्व-स०" ॥ २०. स०४ : "म्० त्व" नास्ति ॥ २१. स० १,५ : "०र्थस्य" ॥ २२. स०४ : "वक्तव्यम्" ॥ २३. स०४ : वाक्यमिदं नास्ति ॥ २४. स०१ : "०ह-मूतत्व०" ॥ २५. स० ४ : "घटादि० तत्रापि" इत्यस्य स्थाने "पटेऽतिव्याप्तिः; अतः" इत्यस्ति ॥ २६. स०५ : अस्य वाक्य-शेषस्य स्थाने "ईश्वर-सङ्केतत्वम् ।" इत्यस्ति ॥ २७. स०२-४ कोषेष्वितोऽग्रे "तात्पर्य-ज्ञानं शक्ति-ज्ञानम्" इत्यधिकम् ॥ २८. स० १,५ : "०न-का०" ॥ २९. स०२,५ : "०क्षत्वं" । इदं च "त्वे च ।" (अष्टाध्यायी ६।३।६४) इत्यस्य छन्दस्येव प्रवृत्तत्वाल्लक्षण-विरुद्धत्वादुपेक्ष्यम् ॥ ३०. स०५ : नास्ति ॥ ३१. स०१ कोषे "प्रत्युक्त-" ॥ ३२. स० १-४ : "०क्ष-'गौ०'" ॥ ३३. स० १-३ : "अं", ५ : "अमु" ॥ ३४. स०२ : "०क्तं" इति, स०४-५ : "०त्यु[illegible] ॥ ३५. स० १ : "०मेतीति" इति, स० ५ : "०मेंति" ॥ ३६. स०४ : "अर्थ-बा०" ॥ ३७. स०४-५ : "क" नास्ति ॥ ३८. स० १ : "०पास्यर्थं"

भावः। (ख) 'वह्निना सिञ्चेत्[४०]।' इत्याकारक-वाक्ये तु[४१] वह्नि-करणकत्वस्य बाधान्न[४२] वह्नि-करणक-सेकः।" इति (क)अन्वय-(ख) व्यतिरेकाभ्यां 'शाब्द-बुद्धित्वावच्छिन्नं प्रति योग्यता-ज्ञान कारणम्[४३]।' इति सिद्धम् ॥ (iii) सन्निधिर्लक्ष्यः। सन्निधित्वं लक्ष्यताऽवच्छेदकम्। 'पदानामविलम्बेनोच्चारणत्वं' लक्षणम्। '(क) प्रहरे-प्रहरे उच्चारितानि घटादि-पदानि शाब्द-बोधाजनकानि, सान्निध्याभावात्। (ख) सहोच्चारितानि च[४४] घटादि-पदानि शाब्द-बोध-जनकानि।' इति (ख) अन्वय-(क) व्यतिरेकाभ्यां शाब्द-[४५]बुद्धित्वावच्छिन्नं प्रति आसत्ति-ज्ञानस्य हेतुत्वात् ॥

'वाक्यं [४६]द्वि-विधम्' इति [४७]विभागोक्तिः। (i) वैदिक-वाक्यं लक्ष्यम्। वैदिक-वाक्यत्वं लक्ष्यताऽवच्छेदकम्। 'वेदत्वं' लक्षणम्। (ii) लौकिक-वाक्यं[४८] लक्ष्यम्। लौकिक-वाक्यत्वं लक्ष्यताऽवच्छेदकम्। 'आप्तोक्तत्वं[४९]' लक्षणम् ॥

शब्द-प्रमाणं लक्ष्यम्। शब्द-प्रमाणत्वं लक्ष्यताऽवच्छेदकम्। 'शाब्द-बोध[५०]-करणत्वं' लक्षणम्। 'करणत्व-'मात्रोक्तौ कुठारेऽतिव्याप्तिः; तत्रापि करणत्वस्य सत्त्वात्; [५१]अतः 'शाब्द-बोध-[५२]करणत्वम्' उक्तम्[५३]। 'शाब्द-बोध-[५४]करणत्व-'मात्रोक्तावतिदेश-वाक्येऽतिव्याप्तिः; तत्रापि शाब्द-बोध-[५५]करणत्वस्य सत्त्वात्; "'शाब्दत्व'-रूप-जात्यवच्छिन्न-कार्यता-निरूपित-कारणता[५६]-शालित्वम्।" इति यावत्। 'शाब्दत्व-जाति'-सिद्धिस्तु 'शाब्दयामि'[५७] इत्यनुव्यवसायात्मकानुभवादेव, इति ध्येयम्[५९] ॥

॥ इति शब्दोपन्यासः[६०] ॥ ५३ ॥

(२.१६ बुद्धि-विवरणेऽयथार्थानुभवस्य लक्षणम्)

**(२.१६. ii. ख) अ-यथार्थानुभवस्त्रि-विधः (अ) संशय-(आ) विपर्यय-(इ) तर्क-भेदात्—(i) एकस्मिन् धर्मिणि विरुद्ध-नाना-धर्म-वैशिष्ट्यावगाहि[१]**

---

इति, स०४ : "०रूपार्थसे०" इति ॥ ३९. स०५ : "र्थो" ॥ ४०. स०५ :"०चति।" ॥ ४१. स०५ एवेदम् ॥ ४२. स०३ : "बाधाभावान्न" ॥ ४३. स०२कोषे पार्श्वे लिखितमेतत् ॥ ४४. स०५ : "च" स्थाने "तान्येव" इत्यस्ति ॥ ४५. स०१ : "ता०" ॥ ४६. स०४ : "सिद्धि" अधिकम् ॥ ४७. स०४ : "वि" नास्ति ॥ ४८. स०१ : "वाक्यत्वं" ॥ ४९. स०५ : "प्तोक्तं" ॥ ५०. कोषेषु "बोध-"नास्ति ॥ ५१. कोषेषु "अतः" नास्ति ॥ ५२. स०२-४ कोषेषु "बोध" इति नास्ति ॥ ५३ स०५ : "शाब्द० मुक्तम्।" नास्ति ॥ ५४. स०१-४ कोषेषु "बोध" नास्ति। स०५ : "शाब्द-का०" ॥ ५५. स०१,५ : "त्व" नास्ति ॥ ५६. स०१ : "क०" इति, ३ : "करतालि०" इति, स०५ : "करण-शा०" इत्यस्ति ॥ ५७. स०१,३-५ : "त्मिका०" ॥ ५८ "शब्दयामि" इत्युचितम् ॥ ५९. स०१,५ : "बोध्यम्" ॥ ६०. स०५ : "इति०न्यासः" इति नास्ति ॥ ५३ ॥

१. कोषेषु बहु-पाठ-भेदवदिदं वाक्यमिति बोडाः। शास्त्रिगलसंस्करणे, निरुक्तौ च "०वैशिष्ट्य-ज्ञानं" इति यथा-यथं धृतं, व्याख्यातं च। उपन्यास-न्यायबोधिनी-

ज्ञानं=संशयः । यथा—'स्थाणुर्वा ? पुरुषो वा ।' इति ।। (आ) मिथ्या ज्ञानं =विपर्ययः । यथा—शुक्तौ 'इदं रजतम् ।' इति । (इ) व्याप्यारोपेण व्यापकारोपः=तर्कः । यथा—'यदि वह्निर्न स्यात्, तर्हि धूमोऽपि न स्यात्[२] । इति ।। ५४ ।।

(बाल-प्रबोधिनी) अ-यथार्थं विभजते 'अ-यथार्थानुभव०' इति । (i) संशयमाह 'एकस्मिन्०' इति । ज्ञान-मात्रेऽतिव्याप्ति-निरासाय 'धर्म-वैशिष्ट्य-' इति । सविकल्पक[३]-ज्ञाने तत्परिहाराय 'नाना' इति । नाना-रूप-रसाद्यन्वित-द्रव्य-ज्ञाने[४] तद्व्युदासाय 'विरुद्ध-' इति । बहु-धर्मिषु विरुद्ध-नाना-धर्मानुभवे तन्निवृत्त्यै 'एकस्मिन्' इत्युक्तम् । संशयमुदाहरति 'यथा—' इति ।। (ii) विपर्ययमाह 'मिथ्या०' इति= 'भ्रमात्मक-ज्ञानम्' इत्यर्थः । न्याय-मते 'मिथ्या'-पदार्थानङ्गीकारेण 'मिथ्या-पदार्थ-विषयं ज्ञानम्' इत्यसम्मतत्वादुदाहरति 'यथा—' इति ।। (iii) तर्कमाह 'व्याप्य०' इति । उदाहरति "यथा—'यदि०" इति । वह्न्यभावस्य=व्याप्यस्यारोपेण धूमाभावस्य=व्यापकस्यारोपो दर्शितः । तथा धूमस्य=व्याप्यस्यारोपेण व्यापकस्य= वह्नेरारोपोऽपि ज्ञेयः; 'यदि धूमः स्यात्, तर्हि वह्निरपि स्यात् ।' इत्यर्थः ।।

(उपन्यासः) 'अ-यथार्थानुभवस्त्रि-विध' इति विभागोक्तिः । (i) संशयो लक्ष्यः । संशयत्वं लक्ष्यताऽवच्छेदकम् । 'एकस्मिन्धर्मिणि विरुद्ध-नाना-धर्म-प्रकारक-ज्ञानत्वं' लक्षणम् । '[५]विरुद्ध-नाना-धर्म-प्रकारक-ज्ञानत्वम्' उक्तौ 'घट-पटौ' इति समूहालम्बनेऽतिव्याप्तिः; तत्र[६] विरुद्ध-नाना-धर्म-प्रकारकत्वस्य सत्त्वाद्[७] 'एक-धर्मिक' इत्युक्तम् । 'एक-धर्मिक-नाना-धर्म-प्रकारकत्वम्' उक्तौ 'घटो=द्रव्यम्' इत्याकारक-ज्ञानेऽतिव्याप्तिः; तत्रैक-धर्मिक[८]-नाना-धर्म-प्रकारकत्वस्य[१०] सत्त्वात्; अतो 'विरुद्ध-' इत्युक्तम् । 'एक-धर्मिक-विरुद्ध-धर्म-प्रकारकत्वम्[११]' उक्तौ 'घटत्व-विरुद्ध-पटत्ववान्' इत्याकारक-ज्ञानेऽतिव्याप्तिः;[१२] तत्र विरुद्ध-धर्म-प्रकारकत्वस्य सत्त्वात्; अतो 'नाना' इत्युक्तम्[१३] ।।

---

वाक्य-वृत्ति-नृसिंहप्रकाशिकासु, दीपिका-प्रकाशे च कदाचिद् "०धर्म-प्रकारक-ज्ञानं" इति पाठो व्याख्यातः । पदकृत्य-सिद्धान्तचन्द्रोदययोश्च यथा-धृत-पाठो धृतो, व्याख्यातश्च ।। २. एकस्मिन्कोषे उदाहरणं "यद्ययं निर्वह्निः स्यात्, तर्हि निर्धूमोऽपि स्यात् ।" इति वर्तत इति बोध्यः । वाक्य-वृत्तौ कदाचिदिदमेवोदाहरणं मनसि कृत्वाऽयो-गोलके धूमाभाव-विचारः कृतः । उपन्यासे, नृसिंह-प्रकाशिकायां च यथा-धृतोदाहरणमेव धृतं, व्याख्यातं च । पदकृत्य-सिद्धान्तचन्द्रोदययोरपीदमेव व्याख्यातम् ।। ३. स०कोषे "सविकल्प-ज्ञाने" ।। ४. अस्मत्कोषे "न व्यु" ।। ५ स०५ : "विरुद्ध" नास्ति ।। ६.स० १, ३-४ कोषेषु "तत्रावि०" इति, स० ५ कोषे च "तत्रापि वि०" इत्यस्ति ।। ७. स० २ कोषे "०दिक०" इति लिखितेऽस्य मध्ये काक-पदं दत्त्वाऽधस्तन-पार्श्वे "त्ये" इति लिखितमस्ति, येनेदं "०दित्येक०" इति सम्पद्यते ।। ८. स० ५ : "०के" ।। ९. स० ४ : "धर्मिक० धर्म-प्र" इति स्फटितं वर्तते ।। १०. स० १ : "स्य" नास्ति ।। ११. स० २ : "मु" इति लिखितं हरिताल[illegible] 'त्वोक्तौ' इति कृतम् ।।

(ii) विपर्ययो लक्ष्यः । विपर्ययत्वं लक्ष्यताऽवच्छेदकम् । 'मिथ्या-ज्ञानत्वं' लक्षणम् । 'ज्ञानत्व'-मात्रोक्तौ 'घट' इत्याकारक-ज्ञानेऽतिव्याप्तिः; तत्र ज्ञानत्वस्य[14] सत्त्वात्; अतो 'मिथ्यात्वम्' उक्तम् । मिथ्यात्व-' मात्रोक्तौ मिथ्या-रजतेऽतिव्याप्तिः; तत्रापि मिथ्यात्वस्य सत्त्वात्; अतो 'ज्ञानत्वम्' उक्तम्[15] ॥ (iii) तर्को लक्ष्यः । तर्कत्वं लक्ष्यताऽवच्छेदकम् । 'व्याप्यारोपेण व्यापकारोपत्वं[16]' लक्षणम् । उदाहरणन्तु 'यदि वह्निर्न स्यात्, तर्हि वह्नि-जन्यो[17] धूमोऽपि न स्यात् ।' इति ॥ ५४ ॥

(२.१६ बुद्धि-विवरणे (i) स्मृतेर्लक्षणम्)

**(२.१६.i) स्मृतिरपि द्वि-विधा (क) यथाऽर्था, (ख) अयथाऽर्था च— (क) प्रमा-जन्या=यथाऽर्था, (ख) अप्रमा-जन्या=अयथाऽर्था ॥ ५५ ॥**

(बाल-प्रबोधिनी) स्मृतिं विभजते 'स्मृतिः०' इति । (क) यथार्थमाह 'प्रमा०' इति । अयथार्थ[1]-स्मृतौ प्रमायां चातिव्याप्ति-निरासाय 'प्रमा-जन्या' इत्युक्तम् । प्रमा-जन्य-संस्कारे तन्निरासाय 'स्मृति-'पदमपि देयम् ॥ (ख) अयथार्थमाह 'अप्रमा०' इति ॥ पूर्ववत् ॥

॥ बुद्धिर्निरूपिता ॥

(उपन्यासः) 'स्मृतिरपि०'[2] इत्यादिना स्मृतौ प्रमात्वं भ्रमत्वं चानुभवाधीनमिति द्योतनाय[3] ॥ ५५ ॥

(२.१७ सुख-लक्षणम्)

**(२.१७) सर्वेषामनुकूलतया[1] वेदनीयं=सुखम् ॥ ५६ ॥**

(बाल-प्रबोधिनी) सुखस्य लक्षणमाह 'सर्वेषाम्०' इति । दुःखादि-व्यावृत्त्यर्थम् 'अनुकूल०' इति । स्रगादावतिव्याप्ति-निरासाय 'सर्वेषाम्' इति ॥

(उपन्यासः) सुखं लक्ष्यम् । सुखत्वं लक्ष्यताऽवच्छेदकम् । 'सर्वेषामनुकूल-वेदनीयत्वं' लक्षणम् । 'वेदनीयत्व-'मात्रोक्तौ सर्पेऽतिव्याप्तिः, तत्रापि वेदनीयत्वस्य सत्त्वात्; अतः 'अनुकूल-' इत्युक्तम् । 'अनुकूल-वेदनीयत्व-[2]' मात्रोक्तौ कलञ्ज-भक्षणेऽतिव्याप्तिः; तत्र [3]कस्यचिद्रोगिणोऽनुकूल-वेदनीयत्वस्य सत्त्वात्; अतः 'सर्वेषाम्'

---

१२. स०१ : "व्याप्तिः" नास्ति । "तत्र" इति स्थाने "तन्त्र" इति चास्ति ॥ १३. स०१ : "०क्तौ" ॥ १४. स०४ : "त्व" इति, "अतः सत्त्वात् ।" इति च नास्ति ॥ १५. स०३ कोषे "विपर्यय"-ग्रन्थः सर्वोऽपि पुनर्लिखितोऽस्ति ॥ १६. स०१-४ : "०पकत्वं" ॥ १७. स०५ : "व० न्यत्वं" नास्ति ॥ ५४ ॥

१. अस्मत्कोषे "अयथार्था-" इति, स०कोषे च "अयथार्थ" इत्यस्ति ॥ २. स०५ कोषे "स्मृति" इति, स०४कोषे च "र" इति नास्ति ॥ ३. स०५ : "य" नास्ति ॥ ५५ ॥

१. कतिपुचनाधार-ग्रन्थेषु "अनुकूल-वेदनीयं", "प्रतिकूल-वेदनीयम्" इति सुख-दुःख-लक्षणयोरिति बोद्धाः । पद-कृत्ये, उपन्यासे च व्याख्यातमिदम् । वाक्यवृत्ति-निरुक्ति-दीपिकाप्रकाश-नृसिंहप्रकाशिकासु यथा-धृतमेव धृतं, व्याख्यातं च ॥ २. स०

इत्युक्तम् ॥ ५६ ॥

(२.१८ दुःख-लक्षणम्)

**(२.१८) [1]प्रतिकूलतया[2] वेदनीयं=दुःखम् ॥ ५७ ॥**

(बाल-प्रबोधिनी) दुःखं लक्षयति 'प्रतिकूल०' इति । सुखादि-व्यावृत्त्यर्थं 'प्रतिकूल०' इति । विषादि-व्यावृत्त्यर्थं 'सर्वेषाम्' इति[3] वाच्यम् । तथा च प्रतिकूलानामपि अभक्ष्य-विषादीनामौषधादावप्रतिकूलत्वेन न तत्रातिव्याप्तिः ॥

(उपन्यासः) दुःखं लक्ष्यम् । दुःखत्वं लक्ष्यताऽवच्छेदकम्[4] । 'प्रतिकूल-वेदनीयत्वं' लक्षणम् । 'वेदनीयत्व[5]-'मात्रोक्तौ [6]सूपोदनेऽतिव्याप्तिः; अतः 'प्रतिकूल'-इत्युक्तम् । प्रतिकूल-वेदनीयत्वस्य [7]कस्यचिद्रोगिणः [6]सूपोदनेऽपि सत्त्वात्; अतोऽत्रापि 'सर्वेषाम्' इत्यनुषज्जनीयम्[8] ॥ ५७ ॥

(२.१९इच्छा-२०द्वेष-२१प्रयत्न-२२धर्म-२३अधर्माणां लक्षणानि)

**(२.१९)-इच्छा=कामः ॥ (२०) क्रोधो=द्वेषः ॥ (२१) कृतिः=प्रयत्नः ॥ (२२) विहित-कर्म-जन्यो=धर्मः ॥ (२३) निषिद्ध-कर्म-जन्यस्त्वधर्मः ॥ ५८ ॥**

(बाल-प्रबोधिनी) (२.१९) इच्छामाह 'काम' इति । 'प्रयत्न-भिन्नत्वे सति साक्षादनुकूल-प्रयत्न-कारण[1]-विशेष गुणः ।' इति ज्ञेयम् । ज्ञानेऽतिव्याप्ति-निरासाय 'साक्षात्' इति । ईश्वरादावात्मनि च तद्व्यावृत्त्यै 'गुण' इति । आत्म-मनः-संयोगे[2] तन्निरासाय 'विशेष' इति । पट[3]-रूपादि-स्व-ज्ञानादि-हेतु-तन्तु-रूपादौ तन्निवारणाय 'प्रयत्न' इति । द्वेषे तद्वारणाय 'अनुकूल-' इति । ईश-प्रयत्ने तद्व्यावृत्त्यै 'प्रयत्न-भिन्नत्वे सति' इति । ईश्वरेच्छाया अपि जीव-प्रयत्न-कारणत्वान्नाव्याप्तिरपि[4] ॥ (२.२०) द्वेषमाह 'क्रोध' इति । [5]'प्रयत्न-भिन्नत्वे सति साक्षात्प्रतिकूल-प्रयत्न-

---

१ : "त्व" नास्ति ॥ ३. स०२ कोष एवायम्पाठः; इतरत्र स० १, ३-४ कोषेषु "कश्चिद्रोगिणा" इति, स०५ कोषे च "कश्चिद्रोगिणाममुकू०" इत्यस्ति ॥ ५६ ॥

१. बोडास्संस्करणेऽत्र "सर्वेषाम्" इत्यप्यस्ति । न्यायबोधिनी-पदकृत्य-वाक्यवृत्ति-निरुक्ति-नृसिंहप्रकाशिका-बालप्रबोधिन्युपन्यासेषु सर्वत्र प्रतीकं, पाठश्च यथा-धृतानुसारेणैव दत्ते, व्याख्यायां च "अत्रापि सर्वेषाम् इत्यनुषज्यते" (निरुक्तौ, उपन्यासे, बाल-प्रबोधिन्यां च) इत्यादि प्रोक्तम् । तस्मादिदमत्र न मौलिकम् ॥ २. ५६अनुच्छेदगता १ टि० द्रष्टव्या ॥ ३. अस्मत्कोषे "इत्यपि" ॥ ४. स०४ कोषे "कम् । प्रतिकू" इति पाठोपरि कागज-संश्लेषणेन लुप्तम् ॥ ५. स०४ : "त्व" इति नास्ति ॥ ६. स० ४ : "सूयोदने" इत्यस्ति ॥ ७. स०२कोष एवायम्पाठः; इतरत्र स०१, ३ कोषयोः "कश्चिद्रोगिणा" इति, स०४-५ कोषयोश्च "कश्चिद्रोगिणां" इति पाठः ॥ ८. स०१ : "०नुषङ्गुष्टीणीयम्" इति, स०२ : "०नुषजणीयम्" इति, स०३-४ : "०नुषङ्गणीयम्" इति, स०५ : "०नुषंगनीयम्" इत्यस्ति ॥ ५७ ॥



१. अस्मत्कोषे "ण" इति नास्ति । २. अस्मत्कोषे "आत्मनः संयोग" इत्य-

कारण-विशेष-गुणः-' इति पूर्ववत्। इच्छा-व्यावृत्त्यै 'प्रतिकूल-' इति ॥ (२.२१) प्रयत्नमाह 'कृतिः' इति । 'देहादि-साक्षात्प्रवर्तकात्म-गुणः।' इति ज्ञेयम्। ज्ञान-इच्छा-ईश्वराद्यतिव्याप्ति-निरासाय 'साक्षाद्' इति । आत्मनि, देहे च तन्निवृत्त्यै 'आत्म-गुण' इति ज्ञेयम् ॥ (२.२२) धर्मं लक्षयति 'विहित०' इति । लौकिके, निषिद्धे च कार्येऽतिव्याप्ति-वारणाय 'विहित-' इति । विहित-कर्मणि तद्वारणाय 'जन्य०' इति ॥ (२.२३) अधर्मं लक्षयति 'निषिद्ध०' इति । विहित-लौकिक-कार्य-व्यावृत्त्यै 'निषिद्ध-' इति । निषिद्ध-कर्म-व्यावृत्त्यै '-जन्य-' इति ॥

(उपन्यासः) (२.१९) इच्छा लक्ष्या । इच्छात्वं लक्ष्यताऽवच्छेदकम् । 'काम-त्वं' लक्षणम् ॥ (२.२०) [6]द्वेषो लक्ष्यः । द्वेषत्वं लक्ष्यताऽवच्छेदकम् । [7]'क्रोधत्वं' लक्षणम् ॥ (२.२१) प्रयत्नो लक्ष्यः । प्रयत्नत्वं[8] लक्ष्यताऽवच्छेदकम् । 'कृतित्वं' लक्षणम् ॥ (२.२२) धर्मो लक्ष्यः । धर्मत्वं लक्ष्यताऽवच्छेदकम् । 'विहित-कर्म-जन्यत्वं' लक्षणम् । 'कर्म-जन्यत्व-[9]'मात्रोक्तौ[10] निषिद्ध-कर्म-जन्येऽतिव्याप्तिः; तत्रापि कर्म-जन्यत्वस्य सत्त्वात्; अतो 'विहित-' इत्युक्तम् । 'विहितत्व-'मात्रोक्तौ कर्मण्यतिव्याप्तिः; तत्रापि विहितत्वस्य सत्त्वात्; अतः [11]'कर्म जन्यत्वम्' उक्तम् ॥ (२.२३) अधर्मो लक्ष्यः । अधर्मत्वं लक्ष्यताऽवच्छेदकम् । 'निषिद्ध-कर्म-जन्यत्वं' लक्षणम् । 'कर्म-जन्यत्व-' मात्रोक्तौ धर्मेऽति[12]व्याप्तिः; तत्रापि कर्म-जन्यत्वस्य सत्त्वात्; अतो 'निषिद्धत्वम्' उक्तम् । 'निषिद्धत्व-'मात्रोक्तौ निषिद्ध-कर्मण्यतिव्याप्तिः; अतो 'निषिद्ध-कर्म-जन्यत्वम्' उक्तम् ॥ ५८ ॥

## (२.१६-२३ बुद्ध्याद्यष्ट-गुणानां विशेषाश्रय-कथनम्)

**(२.१६-२३) बुद्ध्यादयोऽष्टावात्म-मात्र[1]-विशेष-गुणाः—(१६) बुद्धि-(१९) इच्छा-(२१) प्रयत्ना[2] द्वि-विधाः (i) नित्या, (ii) अनित्याश्च; (i) नित्या ईश्वरस्य, (ii) अनित्या जीवस्य[3] ॥ ५९ ॥**

---

स्ति ॥ ३. अस्मत्कोषे "घट-" ॥ ४. स०कोषे "०न्न व्या०" ॥ ५. स०कोषे "यत्न-" इति ॥ ६. स०५ : 'द्वेषो० कृतित्वं लक्षणम् ।" अत्र नास्ति, परं "विहित-कर्म-जन्य-त्वं लक्षणम् ।" इत्यतः परस्तादस्ति ॥ ७. स०४ : "क्रोधत्वं०प्रयत्नत्वं लक्ष्यताऽच्छेद-कम् ।" नास्ति ॥ ८. स०१, ४-५ : "प्रयत्नं" ॥ ९. स०४ : "त्व" नास्ति ॥ १०. स०१-४ कोषेषु "अधर्मेति०" इत्यस्ति ॥ ११. स०४ : "कर्म०मुक्तम्" नास्ति ॥ १२. स०४ : "मेंऽपि व्याप्तिः" ॥ ५८ ॥

१. निरुक्तौ "आत्मनो गुणाः" इति पाठो व्याख्यातः । नृसिंह-प्रकाशिकायां च "आत्म-विशेष-गुणाः" इति पाठो धृतो, व्याख्यातश्च । सिद्धान्त-चन्द्रोदये तु "मात्र"-पदं व्याख्यातम्—"अत्र "मात्र"-पदमवधारणार्थम्" इति ॥ २. कतिपयाधारेषु "द्वि-विधाः" इति नास्तीति बोद्धाः । शास्त्रिगल्कुप्पूस्वामि-गुरुप्रसाद-संस्करणेष्वपि नेदमस्ति । टीका अत्र मौनमाश्रयन्ते ॥ ३. "अत्र 'प्रयत्न'-निरूपणानन्तरमेव त्रयाणां विभागस्य कर्तव्यतया तद् विहाय 'अधर्म'-निरूपणानन्तरं तेषां विभाग-करणे बीजं

(बाल-प्रबोधिनी) बुद्धयाद्याश्रयं, तदवान्तर-भेदं चाह 'बुद्धयादय०' इति ॥

(उपन्यासः) 'बुद्धयादय' इत्यादिनाऽष्ट-गुण[४]स्त्वमात्मनि । (i) परमात्मनि विद्यमाना नित्याः[५], (ii) जीवात्मन्यनित्याः[६] ॥ वायोर्नव गुणाः । एकादश तेजसि । पृथिवी-जल-जीवात्मनां चतुर्दश । काल-दिशोः पञ्च । आकाशे षट् । मनस्यष्टौ । तथैव चेश्वरे ॥ ५९ ॥

(२.२४ संस्कार-गुणस्य लक्षणम्)

**(२.२४) संस्कारस्त्रि-विधः—(i) वेगो, (ii) भावना, (iii) [१]स्थित-स्थापकश्चेति । (i) वेगः (१.१-४) पृथिव्यादि-चतुष्टय-(१.६) मनो[२]-वृत्तिः । (ii) अनुभव-जन्या, स्मृति-हेतुर्=भावना (१.८) आत्म-मात्र-वृत्तिः । (iii) अन्यथा स्थितस्य[३] पुनस्ताद[४]वस्थ्यापादकः=[१]स्थित-स्थापकः (१.१) कटादि-पृथिवी-वृत्तिः ॥ इति गुणाः[५] ॥ ६० ॥**

(बाल-प्रबोधिनी) संस्कारत्व-जातिमान्[६]=संस्कारः । तद्विभागमाह 'संस्कारस्त्रि-विध०' इति । (i) द्वितीय-पतनादि-कर्मासमवायि-कारणं=वेगः । तदाश्रयमाह 'पृथिव्यादि०' इति ॥ (ii) भावनां लक्षयति 'अनुभव०' इति । आत्मादावतिव्याप्ति-वारणाय 'अनुभव-जन्या' इति । अनुभव-ध्वंसे तद्व्यावृत्त्यै 'स्मृति-हेतुः' इत्युक्तम् । आश्रयमाह 'आत्म०' इति ॥ (iii) स्थिति-स्थापकं लक्षयति 'अन्यथा०' इति । 'संस्कार' इति शेषः । भावनादावतिव्याप्त्यभावाय 'अन्यथा-' इत्यादि । तादृशे पुरुषेऽतिव्याप्ति-निरासाय 'संस्कार-' इति । आश्रयमाह 'कटादि०' इति ॥

॥ [७]इति गुणाः ॥

---

मृग्यम् इति 'प्रयत्न'-निरूपणानन्तरमेव निरुक्त-त्रयाणां विभाग-ग्रन्थः स्वीकार्यः । "आत्म-विशेष-गुणाः" इत्युत्तरं निरुक्त-विभाग-ग्रन्थः प्रामादिक इति प्रतिभाति ।"—नृसिंह-प्रकाशिका (पृष्ठं ३८०) । टीकाऽन्तराण्येतस्मिन्विभाग-कथने मौनमेव दधति ॥ ४. स०३ : "०णवत्त्व०" ॥ ५. स०४ : नास्ति ॥ ६. स०१-२कोषयोः "०निऽवित्याः" इति, स०४-५ : "०नि अनित्याः" ॥ ५९ ॥

१. बोडासो द्वयेतरेष्वाधारेषु "स्थिति०"- इति पाठः । उपन्यास-बालप्रबोधिनी-पदकृत्येष्वयं पाठो धृतः । शास्त्रिगल्कुप्पूस्वामिनोस्तु "स्थित"-इति पाठः, स च निरुक्ति-नृसिंहप्रकाशिकयोर्धृतश्च, व्याख्यातश्च ॥ २. बोडासस्त्रिष्वाधारेषु वाक्य-वृत्तौ चात्र "मात्र" इत्यधिकम् । निरुक्तौ यथा-घृतमेव धृतम् ॥ ३. चतुर्ष्वपि संस्करणेषु, वाक्य-वृत्तौ, नृसिंह-प्रकाशिकायां च "कृतस्य" इति धृतं, व्याख्यातं च । निरुक्तौ यथा-धृतमेव धृतं, व्याख्यातं च । "कृतस्य" इति पाठान्तरं प्रोक्तम् । यथा-स्थितस्य योगानुकूलत्वाच्चेदमेव धृतमस्माभिः ॥ ४. बोडा-गुरुप्रसाद-संस्करणयोः "तदवस्थाऽऽपादकः" इति पाठः । निरुक्ति-नृसिंहप्रकाशिकयोस्तु यथा-धृत एव पाठो धृतो व्याख्यातश्च ॥ ५. कुप्पूस्वामि-[illegible]-पदकृत्येऽपि धृतमिदम् । वाक्य-वृत्तौ चास्याशयः कदाचित्परामृष्टः स्यात् ॥ ६. अस्मत्कोषे "जातीयान्" ॥ ७.

(उपन्यासः) 'संस्कारस्त्रि-विध०' इति विभागोक्तिः। (i) वेगो लक्ष्यः। वेगत्वं लक्ष्यताऽवच्छेदकम्। 'क्रिया-जन्यत्वे सति वेगत्वं' लक्षणम्। 'क्रिया-जन्यत्व-'मात्रोक्तौ संयोगादावतिव्याप्तिः; तत्रापि क्रिया-जन्यत्वस्य सत्त्वात्; अतो 'वेगत्वम्' उक्तम्[8]। 'वेगत्व'[9]-मात्रोक्तौ [10]लक्षण-लक्ष्यताऽवच्छेदकयोरभेद-प्रसङ्गः; अतः 'क्रिया-जन्यत्व-' विशिष्टमुक्तम्॥ (ii) भावना लक्ष्या। भावनात्वं लक्ष्यतावच्छेदकम्। 'अनुभव-जन्यत्वे सति स्मृति-हेतुत्वं' लक्षणम्। 'अनुभव-जन्यत्व-'मात्रोक्तावनुभव-ध्वंसेऽतिव्याप्तिः; तत्राप्यनुभव-जन्यत्वस्य सत्त्वात्; अतः 'स्मृति-हेतुत्वम्' उक्तम्। 'स्मृति-हेतुत्व-' मात्रोक्तावनुभवेऽतिव्याप्तिः; तत्रापि स्मृति-हेतुत्वस्य सत्त्वात्; अतः 'अनुभव-जन्यत्वम्' उक्तम्; अनुभव-जन्यत्वस्यानुभवेऽभावान्नातिव्याप्तिः॥ (iii) स्थिति-स्थापको लक्ष्यः स्थिति-स्थापकत्वं लक्ष्यतावच्छेदकम्। 'क्रिया-जन्यत्वे सति स्थिति-स्थापकत्वं' लक्षणम् 'क्रिया-जन्यत्व'-मात्रोक्तौ क्रिया-ध्वंसेऽतिव्याप्तिः; अतः [11]'स्थिति-स्थापकत्वम्' उक्तम्। 'स्थिति-स्थापकत्व'-मात्रोक्तौ लक्षण-लक्ष्यताऽवच्छेदकयोरैक्य-प्रसङ्गः; अतः 'क्रिया-जन्यत्वम्' उक्तम्। 'कटादि-पृथिवी-वृत्तिः' इत्याश्रयोक्तिः॥ (ii) भावनाऽऽत्म-मात्र-वृत्तिः॥ (i) वेगो मूर्त-द्रव्य-वृत्तिः॥

॥ इति गुणोपन्यासः॥ ६०॥

(३. 'कर्म'-पदार्थ-लक्षणम्)

**(३.) चलनात्मकं=कर्म। (१)ऊर्ध्व-देश-संयोग-हेतुरुत्क्षेपणम्। (२) अधो-देश-संयोग-हेतुरपक्षेपणम्। (३) शरीर[1]-सन्निकृष्ट[2]-संयोग-हेतुराकुञ्चनम्। (४)[3]शरीर-विप्रकृष्ट[2]-संयोग-हेतुः प्रसारणम्। (५)अन्यत्सर्वं गमनम्॥ पृथिव्यादि-चतुष्टय-मनो-मात्र-वृत्ति[4]॥ ६१॥**

(बाल-प्रबोधिनी) कर्म लक्षयति 'चलना०' इति। चलन-स्वरूपमित्यर्थः। कर्म-विभागस्य पूर्वमुक्तत्वात्तत्रत्य-क्रमेणादावुत्क्षेपण-लक्षणमाह (i) 'ऊर्ध्व०' इति। अव-

---

अस्मत्कोषे "इति" नास्ति॥ ८. स० ४ : नास्ति॥ ९. स० १ : "वेगवत्त्व-"॥ १०. स०५ : नास्ति॥ ११. स०२कोषे पङ्क्तावसन् वाक्य-शेषोऽयं काक-पदेन संसूच्याधस्तात्पृष्ठ-पार्श्वे लिखितः॥ ६०॥

१. बोडासस्त्रिष्वाधारेषु, कुप्पूस्वामि-गुरुप्रसाद-संस्करणयोश्च "शरीरस्य" इति पाठः। टीकासु तु प्रतीकं यथा-घृतमेव लभ्यते॥ २ कोषेषु, नृसिंह-प्रकाशिकायां च यद्यप्यत्र "देश" इति नास्ति, तथाऽप्यत्रेदमावश्यकं प्रतीयते—(१) उत्क्षेपणापक्षेपण-लक्षणयोरस्ति, दैशिकाधारेणैव चेदं विभाजनम्, इत्यत्रापि "देश" इति स्यात्; (२) उपन्यासे व्याख्यातमपीदम्; (३) "सन्निकृष्ट","विप्रकृष्ट" शब्दौ विशेषणे, तयोर्विशेष्यत्वेन "देश" इत्यावश्यकम्॥ उपन्यासेतरासु टीकास्वाकुञ्चन-प्रसारणे न व्याख्याते, घृते, उद्धृते वा॥ ३. अत्र "शरीर-" इति नृसिंहप्रकाशिकोपन्यासयोरस्ति। संस्करणेषु नेदं वाक्यमस्ति; परं नृसिंहप्रकाशिकायां, बाल-प्रबोधिन्याम्, उपन्यासे चास्य प्रतीक-भूमिका-बन्धनादि-रूपेण तु नास्ति। टीकाऽन्तरेषु मौनम्॥ ४. कोषेषु संस्करणेषु

क्षेपणादावतिव्याप्ति-वारणाय 'ऊर्ध्व-देश०' इति ॥ असम्भव-वारणाय 'संयोग०' इति । द्रव्येऽतिव्याप्ति निरासाय 'असमवायि-' इत्यपि देयम् ॥ (ii) अवक्षेपणादीन् लक्षयति 'अधो-देश०' इत्यादि । पूर्ववत् ॥ आश्रयमाह 'पृथिव्यादि०' इति ॥

कर्म-निरूपितम् ॥

(उपन्यासः) कर्म लक्ष्यम् । कर्मत्वं लक्ष्यताऽवच्छेदकम् । 'चलनात्मकत्वं' लक्षणम् । लक्षण-लक्ष्यताऽवच्छेदकयोरैक्य-प्रसङ्गस्तु 'कर्मात्मक-'पद-वाच्यत्वस्य लक्ष्यताऽवच्छेदकत्वमभ्युपेत्य वारणीयः । 'उत्क्षेपणापक्षेप०' इत्यादिना विभागोक्तिः । (i) उत्क्षेपणं लक्ष्यम् । उत्क्षेपणत्वं लक्ष्यताऽवच्छेदकम् । 'ऊर्ध्व-देश-संयोग-हेतुत्वं' ॥ लक्षणम् । 'संयोग-हेतुत्व'-मात्रोक्तावपक्षेपणादावतिव्याप्तिः; तत्र संयोग-हेतुत्वस्य सत्त्वात्; अत 'ऊर्ध्व-देश'-इत्युक्तम् । ऊर्ध्व-देश-संयोग-[५]हेतुत्वमूर्ध्व-देश-संयोगेऽप्यस्ति, इत्यतिव्याप्तिः । हेतुत्वं चासमवायि-विधया[६] बोध्यम् ॥ (ii) [७]अपक्षेपणं लक्ष्यम् । [७]अप-क्षेपणत्व लक्ष्यताऽवच्छेदकम् । 'अधो-देश-संयोग-हेतुत्वं' लक्षणम् । 'संयोग-हेतुत्व'-मात्रोक्तौ उत्क्षेपणेऽतिव्याप्तिः; तत्र संयोग-हेतुत्वस्य सत्त्वात्; अतः 'अधो-देश'-इत्युक्तम् । अधो-देश-संयोग-हेतुत्वस्य द्रव्येऽपि सत्त्वादतिव्याप्तिः; अतोऽसमवायि-विधयेति[८] वक्तव्यम् ॥ (iii) [९]आकुञ्चनं लक्ष्यम् । आकुञ्चनत्वं लक्ष्यताऽवच्छेदकम् । 'शरीर-सन्निकृष्ट-देश-संयोग-हेतुत्वं' लक्षणम् । 'संयोग-हेतुत्वम्' [१०]मात्रोक्तावप-क्षेपणेऽति-व्याप्तिः; तस्यापि संयोग-हेतुत्वात्[११]; अतः 'शरीर-सन्निकृष्ट-देश-'इत्युक्तम् । शरीर-सन्निकृष्ट-देश-संयोग-हेतुत्वस्य द्रव्येऽपि सत्त्वादतिव्याप्तिः[१२]; अतो हेतुत्व चासमवायि-विधया बोध्यम् । 'सन्निकृष्ट'-पद सापेक्षम्, इति कृत्वा 'शरीर'-इत्युक्तम् ॥ (iv) प्रसारणं लक्ष्यम् । प्रसारणत्वं लक्ष्यताऽवच्छेदकम् । 'शरीर-विप्रकृष्ट-देश-[१३]-संयोग-हेतुत्वं' लक्षणम् । 'संयोग-हेतुत्व'-मात्रोक्तौ [१४]उत्क्षेपणादावतिव्याप्तिः; अतः 'शरीर-विप्रकृष्ट-देश'-इत्युक्तम् । देशान्तर-संयोगमादायोत्क्षे[१५]-पणादावतिव्याप्ति-[१६]वारणार्थं 'विप्रकृष्ट'-इत्युक्तम् । 'कस्य विप्रकृष्टम् ?' इत्याकाङ्क्षायां[१७] 'शरीर'-इत्युक्तम् ॥ (v) गमनं लक्ष्यम् । गमनत्वं लक्ष्यताऽवच्छेदकम् । "'गमन'-पद-वाच्यत्वं" लक्षणम् ॥ 'पृथिव्यादि-चतुष्टय०' इत्याद्याश्रयोक्तिः ॥ ६१ ॥

(४ 'सामान्य'-पदार्थ-लक्षणम्)

(४) नित्यमेकमनेकानुगतं=सामान्यम् । द्रव्य-गुण-कर्म-वृत्ति ।

---

व्याख्यानमुपलभ्यत इति देयमेतत् ॥ ५. स० ५ : "हेतुत्वम्" नास्ति ॥ ६. स० १,४ कोषयोः "विधाय" ॥ ७. स०४ : "उप०" ॥ ८. स०५ कोषे "विधया हेतुत्वं व०" ॥ ९. स० ५ : वाक्यमिदं नास्ति ॥ १०. स० १-४ : "हेतुत्वमित्युक्तौ" ॥ ११. स०५ "०तुत्वस्य सत्त्वात्" ॥ १२. स०१-४ : "सत्त्वात् । हेतुत्वम्" ॥ १३. स० १-२, ४ कोषेषु "संयोग-"इति नास्ति ॥ १४. स० ४ : "उपेक्षणा०", स०३ : "उत्क्षेपणादिवति व्याप्तिः" ॥ १५. स० ४ : "उपेक्षणा०" ॥ १६. स० २ : "०व्याप्तिः वा०" ॥ १७. स० १-२ : "०क्षां" इति, स० ४ : "क्षा" इत्यस्ति ॥ ६१ ॥

**तद्[1] द्वि-विधम्—(i) परम्, (ii) अपरं चेति। (i) परं=सत्ता, (ii) अपरं द्रव्यत्वादि॥ ६२॥**

(बाल-प्रबोधिनी) सामान्यं लक्षयति 'नित्यम्०' इति। अनेकानुगते[2] विशेषे, रूपादौ चातिव्याप्ति-निरासाय 'एकम्'[3] इति। संयोगादि-द्वित्वादौ तन्निरासाय 'नित्यम्' इति। आकाशादौ, समवाये चातिव्याप्ति-निरासाय 'अनुगतम्'='समवेतम्' इत्यर्थः। तथा चाकाशादेः संयोग एव, इति नातिव्याप्तिः। समवायस्यापि स्वरूप एव सम्बन्धः, अन्यथा समवाये समवाय-स्वीकारेऽनवस्थाऽऽपत्तेः, इति नातिव्याप्तिः॥ तदाश्रयमाह 'द्रव्य०' इति॥ (i-ii) परापर-सामान्य-रूपमाह (i) 'परम्०' इति॥

(उपन्यासः) सामान्यं लक्ष्यम्। सामान्यत्वं लक्ष्यताऽवच्छेदकम्। नित्यत्वे सति, [4]एकत्वे सति अनेकेषु समवाय-सम्बन्धेन[5] वृत्तित्वं[6] लक्षणम्। 'वृत्तित्व-[6]'मात्रोक्तौ रूपेऽतिव्याप्तिः; अतः 'अनेक-' इत्युक्तम्; अनेक-वृत्तित्वस्य एक-व्यक्ति[7]-वृत्ति-रूपेऽभावान्नातिव्याप्तिः। '[8]अनेक-वृत्तित्व'-[9]मात्रोक्तावत्यन्ताभावेऽतिव्याप्तिः; [10]अतः 'अनेक-समवेत'-इत्युक्तम्; अनेक-समवेतत्वस्य संयोगे[11] सत्त्वादतिव्याप्तिः; अतः[12] 'एकत्वे सति' इत्युक्तम्। 'एकत्वे सति समवेतत्वम्' [13]इत्युक्तौ गगन-परिमाणेऽतिव्याप्तिः; अतः 'अनेक-समवेतत्वम्' इत्युक्तम्॥ 'द्रव्य०' इत्याद्याश्रयोक्तिः॥ '(i-ii) परम्०' इत्यादि विभागोक्तिः॥ ६२॥

(५ 'विशेष'-पदार्थ-लक्षणम्)

**(५) नित्य-द्रव्य-वृत्तयो व्यावर्तकाः[1]=विशेषाः॥ ६३॥**

(बाल-प्रबोधिनी) विशेषं लक्षयति 'नित्य-द्रव्य०' इति। तत्र 'नित्य-द्रव्य-वृत्तय' इत्याश्रय-कथनम्। 'व्यावर्तका' इत्येव लक्षणम्। 'स्वाश्रयाणां भिन्नत्वेन

---

१. "तद् द्वि-विधम्" इति बोडास्संस्करण एवास्ति। इतोऽग्रे च बोडासा बहून् पाठ-भेदान्प्रदर्श्य "परापर-भेदात्" इति पाठः स्वीकृतः। यथा-धृत-पाठश्च वाक्य-वृत्तौ, बाल-प्रबोधिन्यामुपन्यासे च प्रतीकत्वेन धृतो यथा-यथं व्याख्यातश्च। नृसिंह-प्रकाशिका-कर्तुर्मूले तु कदाचित् "तद्०चेति" इति पाठो न स्यात्। सिद्धान्तचन्द्रोदये-ऽपीदमुपेक्षितम्॥ २. स० : "०गत-विशेषे"॥ ३. कोषयोः "एक" इति वर्तते॥ ४. स० ५ कोषे "एकत्वे० वृत्तित्वं" इत्यस्य स्थाने "अनेक-समवेतत्वं" इत्यस्ति॥ ५. स० ४ : "न" नास्ति॥ ६. "वृत्तिमत्त्वम्" उचितम्॥ ७ स० ३, ५ कोषयोः "व्यक्ति-" नास्ति॥ ८. स०४ : "अनेक-" नास्ति॥ ९. स०५ : "०त्वस्योक्ता०"॥ १०. स० ४ : नास्ति॥ ११. स० १ : "०गि" इति, स० ३ : "०गी" इति, स० ४ "संगोमत्त्वादति०" इत्यस्ति॥ १२. कोषेषु नास्ति॥ १३. स० ५ : "इति" नास्ति॥ ६२॥

१. " 'नित्य-द्रव्य-वृत्तयः' इत्यत उपरिष्टात्, 'विशेषाः' इत्यतोऽधस्तात्क्व-चित्पुस्तकेषु "व्यावर्तकाः" इत्यस्ति। ... न्यायबोधिनी-वाक्यवृत्ति-बाल-प्रबोधिनी-दीपिकाप्रकाश-सिद्धान्तचन्द्रोदयेष्विदमस्ति। नृसिंह-प्रकाशिकायां त्विदं नास्ति;

स्थापकाः ।' इत्यर्थः ॥

(उपन्यासः) विशेषो लक्ष्यः। विशेषत्वं लक्ष्यताऽवच्छेदकम् । 'सामान्य-भिन्नत्वे सति, सामान्य-शून्यत्वे सति समवेतत्व' लक्षणम् । 'सामान्य-भिन्नत्व-' मात्रोक्तावभावेऽतिव्याप्तिः; अतः 'समवेतत्वम्' उक्तम्; तत्र समवेतत्वाभावान्नातिव्याप्तिः। 'सामान्य-भिन्नत्वे सति समवेतत्वम्' इत्युक्तौ द्रव्येऽतिव्याप्तिः; अतः 'सामान्य-शून्यत्वम्' उक्तम्; तत्र सामान्य-शून्यत्वाभावान्नातिव्याप्तिः । 'सामान्य-शून्यत्वे सति समवेतत्वम्' इत्युक्तौ सामान्येऽतिव्याप्तिः; अतः 'सामान्य-भिन्नत्वम्' इत्युक्तम् ॥ 'समवेतत्वं' नाम समवाय-सम्बन्धेन वृत्तिमत्त्वम्[2]; न तु समवाय-सम्बन्धेन सम्बन्धित्वम्; तस्य समवायेऽपि सत्त्वादतिव्याप्तिः स्यात्; अतः 'समवाय-सम्बन्धेन वृत्तिमत्त्वम्[3]' इत्युक्तम् ॥ ६३ ॥

(६ 'समवाय'-पदार्थ-लक्षणम्)

**(६) नित्य-सम्बन्धः=समवायः । अयुत-सिद्ध-वृत्तिः। ययोर्मध्ये[1] एक-[2]मविनश्यदपराश्रितमेवावतिष्ठते, तावयुत-सिद्धौ । यथा[3]—(i) अवयवावयविनौ, (ii) गुण-गुणिनौ, (iii) क्रिया-क्रियावन्तौ, (iv) जाति-व्यक्ती, (v) विशेष-नित्य-द्रव्ये चेति ॥ ६४ ॥**

(बाल-प्रबोधिनी) समवायं लक्षयति 'नित्य-सम्बन्ध' इति । संयोगेऽतिव्याप्त्यभावाय 'नित्य-' इति । आकाशादौ तदभावाय '-सम्बन्ध' इति ॥ तदाश्रयमाह 'अयुत०' इत्यादि । तत्र प्रथमातिरिक्त-द्वन्द्वेषु 'प्रथमम्प्रथमं समवेतम्, द्वितीयन्द्वितीयं समवायि' इति ज्ञेयम् ॥

(उपन्यासः) समवायो लक्ष्यः । समवायत्वं लक्ष्यताऽवच्छेदकम् । 'अयुत-सिद्धत्वं[4]' लक्षणम् । '[5]युत-सिद्धं[6] न भवति ।' इति [5]अयुत-सिद्धम्[6] । 'ययोर्मध्ये'=जाति-व्यक्त्योर्मध्ये, 'एकम्[7]'=जातिः, 'अविनश्यत्[8]' 'अपरम्'=व्यक्तिम् आश्रित्यैवावतिष्ठते[9] । एवं सर्वत्र ज्ञेयम् ॥ ६४ ॥

---

"विशेषाः" इत्युपरिष्टात्तु "अन्त्या" इति पाठोऽपि धृत्वा व्याख्यातः ॥ २. स०४ : "वृत्तित्वम्" ॥ ३. स०२-४कोषेषु "वृत्तित्वम्" इति पाठः ॥ ६३ ॥

१. बोडास्कुप्पूस्वामि-गुरुप्रसाद-संस्करणेष्वत्र "द्वयोः" इत्यप्यस्ति; परमिदमुपन्यास-(शास्त्रिगलसंस्करण-गत-)न्यायबोधिनी-वाक्यवृत्ति-निरुक्ति-नृसिंहप्रकाशिकासु नास्ति ॥ २. बोडास आधार-त्रये, निरुक्ति-नृसिंहप्रकाशिकयोश्च "अविनश्यत्" इति न धृतम्, न च व्याख्यातम् । वाक्य-वृत्तौ तु धृतं च, व्याख्यातं च ॥ ३. इदं त्रिष्वाधारेष्विति बोडाः। टीका मौनमाकलयन्तीति न सहायिका एतन्निर्णये । नृसिंह-प्रकाशिकायां सत्यप्यवसरे नेदं धृतमिति संशयमस्य प्रामाणिकत्वे जनयति । स्पष्ट-प्रतिपत्तिकरत्वात्तु बोडासा चास्माभिश्च स्वीकृतम् ॥ ४. स०५ : "०द्धि०" ॥ ५. स०३ कोष उभयत्र "०क्त-सिद्ध" ॥ ६. स०१ : "०द्धिः" ॥ ७. स०१ : "एक", स०३-५ : "एका" ॥ ८. स०१, ४-५ : नास्ति ॥ ९. कोषेषु "अव" इति नास्ति । तदभावे

(७ 'अभाव'-पदार्थ-लक्षणम्)

**(७.१) अनादिः, सान्तः प्रागभाव उत्पत्तेः पूर्वं कार्यस्य ॥ (.२) सादिरनन्तः प्रध्वंस[1] उत्पत्त्यनन्तरं कार्यस्य ॥ (.३) [2]त्रै-कालिक-संसर्गावच्छिन्न-प्रतियोगिताकोऽत्यन्ताभावः ॥ यथा—'भूतले घटो नास्ति।' इति। (.४) तादात्म्य-सम्बन्धावच्छिन्न-प्रतियोगिताको[3]ऽन्योन्याभावः। यथा—'घटः पटो न भवति[4]।' इति ॥ ६५ ॥**

(बाल-प्रबोधिनी) पूर्वोक्ताभाव-विभागेषु[5] (.१) प्रागभावं लक्षयति 'अनादि०' इति। घटादावतिव्याप्ति-वारणाय 'अनादिः[6]' इति। आकाशादावतिव्याप्ति-निराकरणाय 'सान्तः' इति ॥ (.२) ध्वंसं लक्षयति 'सादि०[7]' इति। आकाशादावतिव्याप्ति-वारणाय 'सादिः' इति। घटादौ तद्व्यावृत्त्यै 'अनन्त' इति ॥ (.३) अत्यन्ताभावं लक्षयति 'त्रैकालिक०' इति। 'अभाव' इत्यध्याहारः। 'त्रैकालिक-संसर्गः'=नित्य-सम्बन्धः=समवायः; 'समवाय-सम्बन्धेनाभाव' इत्यर्थः। तथा च 'अभाव' इति कथनेन भावेष्वतिव्याप्ति-परिहारः। 'त्रैकालिक-' [8]इत्यादिनाऽभावेषु तत्परिहारः ॥ (.४) अन्योन्याभावं लक्षयति 'तादात्म्य०' इति। 'अभाव' इत्यध्याहारः। 'तादात्म्य-सम्बन्धः'=अभेद-सम्बन्धः, 'तेनाभाव' इत्यर्थः। 'घटः पटो न भवति।'=पटाभिन्नं न भवति ॥

(उपन्यासः) अभावत्व-सामान्य-लक्षणमुक्तमेव। 'अभावश्चतुर्विधः' [9]इति विभागोक्तिः। (.१) प्रागभावो लक्ष्यः। प्रागभावत्वं लक्ष्यताऽवच्छेदकम्। 'विनाशित्वे सत्यभावत्वं' लक्षणम्। 'विनाशित्व-'मात्रोक्तौ घटेऽतिव्याप्तिः; तत्र विनाशित्वस्य सत्त्वात्; अतः 'अभावत्वम्' उक्तम्। 'अभावत्व-'मात्रोक्तावत्यन्ताभावेऽतिव्याप्तिः; अतो 'विनाशित्वम्' उक्तम्; तत्र विनाशित्वाभावान्नातिव्याप्तिः ॥ (.२) ध्वंसो लक्ष्यः। ध्वंसत्वं लक्ष्यताऽवच्छेदकम्। 'जन्यत्वे सत्यभावत्वं' लक्षणम्। 'जन्यत्व-'मात्रोक्तौ घटादावतिव्याप्तिः; अतः 'अभावत्वम्' उक्तम्। 'अभावत्व-' मात्रोक्तौ प्राग-

---

तिष्ठतावात्मनेपदस्य लक्षण-विरुद्धत्वात्, "अव"-युक्तत्वे तदनुकूलत्वात्, इति "अव"-युक्त-स्यैव च मौलिकत्वौचित्यादेतद्युक्तमेव सात्र ॥ ६४ ॥

१. शास्त्रिगलसंस्करणे "प्रध्वंसाभावः" इति पाठः। दीपिकायामेतदुत्थापना "ध्वंसं लक्षयति" इति विहिता। इतरत्र भेदेषु "अभाव" शब्दं दृष्ट्वाऽत्रापि न्यवेशीति प्रतिभाति ॥ २. शास्त्रिगलाऽयमंशः "त्रैकालिकः संसर्गाभावोऽत्यन्ताभावः।" इति धृतः। निरुक्तौ व्याख्यातोऽयं पाठः। अन्येषु संस्करणेषु, टीकासु तु यथा-धृत-पाठ एव धृतो, व्याख्यातश्च ॥ ३. शास्त्रिगलाऽत्र "०ताकाभावोऽत्य०" इति धृतम्। बालप्रबोधिन्यामत्र " 'अभावः' इत्याध्याहारः" इत्युक्तम् ॥ ४. बोडासीययोः द्वयोराधारयोः, कुप्पूस्वामि-गुरुप्रसाद-संस्करणयोश्चात्र "भवति" इति नास्ति। बालप्रबोधिनीनृसिंहप्रकाशिकयोस्तु धृतम् ॥ ५. सं० [illegible] "[illegible]" इत्यधिकम् ॥ ६. कोषयोः "दिः" इति विसर्ग-घटितः पाठः ॥ ८. "०दीति" विसर्ग-रहितः पाठः ॥ ७ कोषयो

भावेऽतिव्याप्तिः; अतो 'जन्यत्वम्' उक्तम्; [९]तत्र जन्यत्वाभावान्नातिव्याप्तिः ॥ (.३) अत्यन्ताभावो लक्ष्यः। अत्यन्ताभावत्वं लक्ष्यताऽवच्छेदकम्। 'त्रैकालिकत्वे सति संसर्गावच्छिन्न-प्रतियोगिताकत्वं' लक्षणम्। 'त्रै-कालिकत्व-' मात्रोक्तावन्योन्याभावेऽतिव्याप्तिः; [९]अतः 'संसर्गावच्छिन्न-प्रतियोगिताकत्वम्' उक्तम्। तत्रापि तादात्म्य-सम्बन्धावच्छिन्न-प्रतियोगिताकत्वस्य सत्त्वादतिव्याप्तिस्तदवस्थैव[१०]; अतः संसर्गत्वं=संयोग-समवायान्यतरत्वम्[११]; 'तदवच्छिन्न-संसर्ग-निष्ठावच्छेदकताक-प्रतियोगित्व[१२]' लक्षणे निवेश्यम्; अतो नातिव्याप्ति-गन्धः[१३] ॥ (.४) अन्योन्याभावो लक्ष्यः। अन्योन्याभावत्वं लक्ष्यताऽवच्छेदकम्। तादात्म्य[१४]-सम्बन्धावच्छिन्न-प्रतियोगिताकत्वे सत्यन्योन्याभावत्वं लक्षणम्। 'तादात्म्य-सम्बन्धावच्छिन्न-प्रतियोगिताकत्व-' मात्रमुक्तं चेत्? संयोगत्य[१५]न्ताभावेऽतिव्याप्तिः; तत्र सयोगि-तादात्म्यम्[१६], संयोग-तदवच्छिन्न-प्रतियोगिताकत्वस्य सत्त्वात्; अतः 'अन्योन्याभावत्वम्[१७]' उक्तम्। 'अन्योन्याभावत्व-' मात्रोक्तौ लक्षण-लक्ष्यताऽवच्छेदकयोरैक्य-प्रसङ्गाद्विशिष्टमुपात्तम् ॥

(.१) प्रागभाव-सद्भावे 'भविष्यति' इत्याकारक-प्रतीतिः[१८] प्रमाणम्; (.२) [१९]ध्वंस-सद्भावे 'ध्वस्त' इत्याकारक-प्रतीतिः; (.३)अत्यन्ताभावे 'नास्ति' इत्याकारक-प्रतीतिः; (.४) अन्योन्याभावे 'इदमिदं न' इति प्रतीतिः[२०] प्रमाणम्। इति बोध्यम् ॥

॥ इति तर्क-सङ्ग्रहोपन्यासः [२१]समाप्तिमगमत् ॥ ६५ ॥

---

अस्मत्कोषे "०दि अ०" ॥ ९. स० ४ : न स्तः ॥ १०. स०१, ३-४ कोषेषु "०स्थयेव' इति, स० २ : "०स्थ एव" इति, स०५ "०स्थैव" इति। अस्मिन्कोषे सर्वत्रैव "स्थ" इति योगः "स्छ" इति रूपेण लिखितोऽस्ति ॥ ११. स०५कोषे "रत्वं तदव०" इत्यस्य स्थाने '०रत्वाव०" इति वर्तते ॥ १२. स०४ : "गिताकत्वं" ॥ १३. स०५ : "प्ति०-प्रसङ्गः" ॥ १४. स०४ : "संसर्गाव०" ॥ १५. स०५ : "०ग्यभावे०" ॥ १६. स०२ कोषे 'दा" नास्ति। स०५ कोषे च "०दात्म्य" इत्यस्ति ॥ १७. स०१ कोषे "भावेऽतित्वम्" इति ॥ १८. स०२कोषे इतोऽग्रे "अत्यन्ता 'भविष्यति' इत्याकारक-प्रतीतिः' इति लिखित्वा मस्या मेटितमस्ति ॥ १९. स०३ : "सध्वं०" ॥ २०. स०१ : "०तीति-प्रामाण्यम्" ॥ २१. स०१-२ कोषयोरेवायमंशः। स०१कोषे चास्मात्परस्तात् "श्री-सीता-रामचन्द्रार्पणमस्तु ॥" इत्यप्यस्ति। अस्मात्परस्तात्स०२कोषे "संवत् १८९५ वर्षे ज्येष्ट-मासे कृष्ण-पक्षे प्रतिपदायां भृगुवासरे लिखितम्।" इत्यप्यस्ति। स०३कोषे "०पन्यासः ॥ श्री-विश्वेश्वरार्पणमस्तु। स्वार्थं, परार्थं च लिखितमस्ति सत्यं सत्यम् ॥ आश्वीन-कृष्ण-द्वादशी-भृगु-वासरे समाप्तम् इश्वर संवत्सरे·······छ छ श्रि" इत्यस्ति। स०४ कोषे "०पन्यासः ॥ फाल्गुन-शुद्ध-दशम्यां शुभम्।" इति। स०५कोषे च

"यादृशं पुस्तकं दृष्ट्वा तादृशं लिखितं मया।
यदि शुद्धमशुद्धं वा, मम दोषो न दीयते ॥
मिति ज्येष्ट कृष्ण १ सके १७७६ संमत १९११ रविवासरे त्तदिनं पुस्तकं समाप्तं झांसी" इत्यस्ति ॥ ६५ ॥

सर्वेषां[1] पदार्थानां यथा-यथमुक्तेष्वेवा[2]न्तर्भावात् 'सप्तैव पदार्थाः ।' इति सिद्धम् ।। काणाद-न्याय-मतयोर्बाल-व्युत्पत्ति-सिद्धये ।
अन्नम्भट्टेन विदुषा रचितस्तर्क-सङ्ग्रहः ।। ६६ ।।

।। इति श्री-महा-महोपाध्यायान्नम्भट्ट-विरचितस्तर्क-सङ्ग्रहः समाप्तः[3] ।।

(बाल-प्रबोधिनी) काणाद-मते=वैशेषिक-शास्त्रे सप्त पदार्थाः, प्रमाण-द्वयं —(i) प्रत्यक्षम्, (ii) अनुमानं च । गौतम-कृत-न्याय-मते च षोडश पदार्थाः, प्रमाण-चतुष्टयम् । अत्र तु 'सप्त-पदार्थ-' कथनेन काणाद-मत-सङ्ग्रहः, प्रमाण-चतुष्टयेन न्याय-सङ्ग्रहः । अत उक्तं 'काणाद-न्याय-मतयोः' । बाला=ईषत्पटवः; तेषां बोधाय[4] । 'विदुषा' इति[5] विदुषो[6] बालानुग्रह-योग्यता ध्वनिता ।।

बोध-दं रामसिंहाख्यं, हरिनाथं सु-मन्त्र-दम् ।
सदासुखमहं वन्दे सच्छास्त्र-प्रदर्शकम् ।।
भवानीदासशर्माणं गायत्र्या वर्ण-दं तथा ।
[7]सुचेनरामराजाख्यं तातं वन्देऽति-भक्तितः ।।
विष्णु-सख्य-समापन्नो रामनारायणः कृती ।
श्रीश-पादेऽर्पये कृत्वा टीकां बाल-प्रबोधिनीम् ।।

।। इति श्री-विष्णु-सख्य-समापन्नेन[8] श्री-रामनारायणेन विरचिता
तर्क-सङ्ग्रह-टीका बाल-प्रबोधिनी समाप्ता ।। ६६ ।।

---

१. बोडासश्चतुर्ष्वाधारेषु, शास्त्रिगलसंस्करणे चात्र "अपि" इति, बोडास एकस्मिन्नाधारे निरुक्तौ चात्र "एव" इत्यधिकं धृतम् । दीपिकाऽऽदौ सर्वत्र कतरदपि नास्ति । शास्त्रिगलसंस्करणे, दीपिका-नृसिंहप्रकाशिकयोश्चात्र "एव" अस्ति ।। २. श्री बोडास्कुप्पूस्वामिगुरुप्रसाद-संस्करणेष्वत्र "एव" नास्ति, श्रीशास्त्रिगलसंस्करणे त्वस्ति । दीपिकायामस्य वाक्यस्य " 'सर्वेषां सप्तस्वेवान्तर्भाव' इत्यर्थः ।" इति व्याख्यायां त्वत्र "एव" मौलिकं प्रतीयते ।। ४. अस्मत्कोषे "बोधः" ।। ५. स०कोषे "विदुषा इति" नास्ति ।। ६. अस्मत्कोषे "विदुषां" ।। ७. स०कोषे "सुचेत०" ।। ८. स०कोषे "न्न" ।। ६६ ।।

अन्नम्भट्टस्य विदुषः कृतौ वै तर्क-सङ्ग्रहे ।
अप्रकाशित-पूर्वे ये टीके पाण्डु-लिपि-स्थिते ।। १ ।।
संशोध्योल्लासिते यत्नात्कोषान्तसम्मेल्य वै बहून् ।
तल्लक्षण-परिच्छेदः शिवानुग्रह-हेतुना ।। २ ।।
शुभे खाग्नि-ख-नेत्राब्दे वैक्रमे मार्ग-शुक्लके ।
एकादश्यां गुरौ घस्रे मध्याह्ने पूर्णतामगात् ।। ३ ।।
'तारोदया'नुजः सोऽयमुल्लासो हृदयस्य मे ।
शिवयोरर्प्यते भावाद् हृद्गत-पाद-युग्मयोः ।। ४ ।।

इति श्री-श्रीनिवासशास्त्रि-सूनु-श्रीशिवनारायणशास्त्रि-कृतौ श्रीतर्कसङ्ग्रह-बालप्रबोधिन्युपन्यासोल्लासे द्वितीयो लक्षण-परिच्छेदो ग्रन्थश्च पूर्णः ।।

# स-बालप्रबोधिन्युपन्यासस्य तर्क-सङ्ग्रहस्य

## विषयानुक्रमणी



### ग्रथोद्देश-परिच्छेदः



### ग्रथ लक्षण-परिच्छेदः

॥ १३ ॥ त० (१.५) 'आकाश'-द्रव्य-लक्षणम् (१७); उ० 'श्रोत्रेन्द्रिय'-लक्षणम् ॥ १४ ॥ त० (१.६) 'काल'-द्रव्य-लक्षणम् ॥ १५ ॥ (१.७) 'दिग्'-द्रव्य-लक्षणम् (१८) ॥ १६ ॥ (१.८) 'आत्म'-द्रव्य-लक्षण-विभागाः ॥ १७ ॥ (१.९) 'मनो'-द्रव्य-लक्षणम् (१९) ॥ १८ ॥

२. 'गुण'-भेद-लक्षण-प्रकरणम् (पृष्ठानि २०-७१; अनुच्छेदाः १९-६०) तत्र (२.१-१५) रूपादि-शब्दान्तानां विवरणम् (पृष्ठानि २०-२७, अनुच्छेदाः १९-३३) : त० (२.१) 'रूप-'लक्षण-विभागाः ॥ १९ ॥ (२.२) 'रस'-लक्षण-भेदादि-कथनम् (२०) ॥ २० ॥ (२.३) 'गन्ध'-लक्षण-भेदाः ॥ २१ ॥ (२.४) 'स्पर्श'-लक्षणभेदाः (२१) ॥ २२ ॥ (२.१-४) 'रूप-रस-गन्ध-स्पर्श'-गुणानामधिष्ठान-विशेष-कथनम्; उ० रूपादि-विशेषाणां लक्षणानि ॥ २३ ॥ त० (२.५) 'सङ्ख्या'-लक्षणम् (२२) ॥ २४ ॥ (२.६) 'परिमाण'-लक्षण-भेदाः; उ० 'परिमाण'-विशेषाणां लक्षणानि (२३) ॥ २५ ॥ त० (२.७) 'पृथक्त्व'-लक्षणम् ॥ २६ ॥ (२.८) 'संयोग'-लक्षणम् ॥ २७ ॥ (२.९) 'विभाग'-लक्षणम् (२४) ॥ २८ ॥ त० (२.१०-११) परत्वापरत्वयोर्लक्षण-भेदाधिष्ठानानि; उ० गुण-द्वय-सहोच्चारणे हेतुः ॥ २९ ॥ त० (२.१२) 'गुरुत्व'-लक्षणाधिष्ठाने (२५) ॥ ३० ॥ त० (२.१३) 'द्रवत्व'-लक्षण-भेदाधिष्ठानानि ॥ ३१ ॥ (२.१४) 'स्नेह'-लक्षणाधिष्ठाने; बा० 'असाधारण'-पदमपि देयम् (२६) ॥ ३२ ॥ त०(२.१५) 'शब्द'-लक्षण-भेदा-धिष्ठानानि; उ० १रूप-२रस-३गन्ध-४-स्पर्श-५सङ्ख्या-६परिमाण-७पृथक्त्व-८संयोग-९विभाग-१२गुरुत्व-१४स्नेह-१५शब्दानामाश्रय-कथनम्-(२७) ॥ ३३ ॥

(२.१६) 'बुद्धि-विवरणम् (पृष्ठानि २७-६७; अनुच्छेदाः ३४-५५) : त० 'बुद्धि'-लक्षण-भेदाः (२७); 'बुद्धि'-भेदयोः (i) 'स्मृति'- (ii.क) 'यथार्थ'- (ii ख) 'अयथार्थ'-अनुभवयोर्लक्षणोदाहरणानि (२८); उ० (ii.क) 'यथार्थानुभव'-लक्षण-परिष्कारः (२९); (ii.ख) 'अयथार्थानुभव'-लक्षण-परिष्कारः (३१-३२) ॥ ३४ ॥ त० (ii.क) 'यथार्थानुभव-तत्करण'-लक्षण-भेदाः ॥ ३५ ॥ 'करण'-'कारण'-'कार्य'-लक्षण-भेदाः (३२); उ० 'व्यापार'-लक्षणम् (३४); 'कारण'-लक्षण-परिष्कारः (३५) ॥ ३६ ॥ त०(ii.क.अ) स-करणस्य प्रत्यक्षानुभवस्य लक्षणम् (३८) ॥ ३७ ॥ 'प्रत्यक्ष-हेतु-सन्निकर्ष'-भेदा लक्षणानि च (३९) ॥ ३८ ॥ इन्द्रियं प्रत्यक्ष-प्रमाणम् ॥ ३९ ॥ (ii.क.आ) अनुमानानुमित्योर्लक्षणे (४०); उ० 'व्याप्ति'-लक्षणन्तत्परिष्कारश्च (४३) ॥ ४० ॥ त० अनुमानं द्वि-विधम् (४८) ॥ ४१ ॥ अनुमानावयवानां लक्षणानि(४९), उ० 'न्याय'-लक्षणम्, 'अवयव'-'प्रतिज्ञा'- हेतु-वाक्य'-'उदाहरण'-लक्षणानि(५०),'उपनय'-'निगमन'-वाक्ययोर्लक्षणे ॥४२॥ त० अनुमिति-करणं = लिङ्ग-परामर्शः ॥ ४३ ॥ 'लिङ्ग'-लक्षणम् (५१) ॥ ४४ ॥ पक्ष-सपक्ष-विपक्षाणां लक्षणानि (५३) ॥ ४५ ॥ 'हेत्वाभास०'-भेदोद्देशः; उ० 'हेत्वाभास'-लक्षणम् (५४) ॥ ४६ ॥ त० '१सव्यभिचार'-हेत्वाभास-लक्षण-भेदाः (५५) ॥ ४७ ॥ '२विरुद्ध'-हेत्वाभास-लक्षणम् (५६) ॥ ४८ ॥ '३सत्प्रतिपक्ष'-हेत्वाभास-लक्षणम् (५७) ॥ ४९ ॥

'४असिद्ध'-हेत्वाभास-लक्षणम् (५८) ॥ ५० ॥ '५बाधित'-हेत्वाभास-लक्षणम् (६०) ॥ ५१ ॥ (ii.क.इ) उपमानोपमित्योर्लक्षणे (६१) ॥ ५२ ॥ (ii.क.ई) 'शाब्दानुभव'-लक्षणम् (६२) ॥ ५३ ॥ (ii.ख) 'अयथार्थानुभव'-लक्षणम् (६५) ॥ ५४ ॥ (i) 'स्मृति'-लक्षणम् (६७) ॥ ५५ ॥

(२.१७-२४) सुखादि-संस्कारान्त-गुण-लक्षण-प्रकरणम् (पृष्ठानि ६७–७१; अनुच्छेदाः ५६-६०) : त० (·.१७) 'सुख'-लक्षणम् (६७) ॥ ५६ ॥ (२.१८) 'दुःख'-लक्षणम् ॥ ५७ ॥ (२.१९-२३) इच्छा-द्वेष-प्रयत्न-धर्माधर्माणां लक्षणानि (६८) ॥ ५८ ॥ (२.१६-२३) बुद्ध्याद्यष्ट-गुणानां विशेषाश्रय-कथनम् (६९); उ० इतर-गुणानामाश्रय-कथनम् ॥ ५९ ॥ त० (२.२४) 'संस्कार'-गुणस्य भेदास्तल्लक्षणानि च (७०) ॥ ६० ॥

(३-७) अवशिष्ट-पदार्थ-लक्षण-प्रकरणम् (पृष्ठानि ७१-७६; अनुच्छेदाः ६१-६५) : त० (३) 'कर्म'-लक्षण-भेदाश्रयाः (७१) ॥ ६१ ॥ (४) 'सामान्य'-पदार्थ-लक्षणाश्रय-भेद-कथनम् (७२) ॥ ६२ ॥ (५) 'विशेष'-पदार्थ-लक्षणम् (७३) ॥ ६३ ॥ (६) 'समवाय'-पदार्थस्य लक्षणम्, आश्रयश्च (७४) ॥ ६४ ॥ (७) 'अभाव'-पदार्थ-भेदानां लक्षणानि (७५); उ० 'अभाव'-पदार्थ-भेदानां सत्त्वे प्रमाणम्; उपन्यासः समाप्तः (७६) ॥ ६५ ॥

उपसंहारः—सर्वेषां पदार्थानामुक्तेष्वन्तर्भावात्सप्तैव पदार्थाः; समाप्तस्तर्क-सङ्ग्रहः; बा० टीका-कृदात्म-परिचयः; समाप्ता बाल-प्रबोधिनी; 'उल्लास'-कृन्निवेदनम् (७७) ॥ ६६ ॥

॥ इति लक्षण-परिच्छेदो ग्रन्थश्च समाप्तः ॥

## पण्डितश्रीशिवनारायणशास्त्री

**जन्म-स्थानम्**—हरियाणा-प्रदेशे रोहतक-मण्डले **खरक** ग्रामः ।

**जन्म-तिथिः**—ज्येष्ठ-कृष्ण-प्रतिपदि, रविवारे, १९९५ वि० वर्षे, मई-मासः पञ्चदशे दिने, १९३८ ई० वर्षे ।

**शिक्षा**—(१) हरियाणा-प्रदेशस्य **भिवानी**-नगरे पितुरधीत्य १९५१ ई० वर्षे पञ्जाब-विश्वविद्यालयस्य **प्राज्ञ**-कक्षा, (२) **रोहट**-ग्रामे (रोहतक-मण्डले) श्री-भगवती-संस्कृत-महाविद्यालये १९५४ ई० वर्षे **विशारद**-कक्षा, (३) **शास्त्री** कक्षा (i) पितुः, (ii) अमृतसरनगरे श्रीगागरमल-संस्कृत-महाविद्यालये, (iii) भिवानीस्थे श्रीहरियाणा-शेखावाटी-ब्रह्मचार्याश्रमे १९५६ ई०, (४) वाराणसेय-संस्कृत-विश्वविद्यालये, वाराणस्याम् १९५९ ई० वर्षे **वेदान्त-शास्त्री** उपाधिः, (५) भिवानी-नगरे १९५९ ई० वर्षे **बी० ए०** उपाधिः, (६) दिल्लीस्थे श्रीहंसराज-महाविद्यालये १९६१ ई० वर्षे एम्० ए० (संस्कृते) उपाधिरुत्तीर्णः ।

**अध्यापनम्**–(१) आर्य-कन्या-महाविद्यालये, बड़ौदा-नगरे, १९६१-६२ ई० सत्रे; (२) दिल्लीस्थे श्रीकिरोड़ीमलमहाविद्यालये १९६२ ई० तोऽध्यापनरतः ।

**कृतयः (क) प्रकाशिताः**—७ ग्रन्था, उप-पञ्चाशाश्च निबन्धाः। **(ख) प्रकाशयिष्यमाणाः** ३ ग्रन्थाः ।

**पुरस्काराः**—प्रथमे **निरुक्त-मीमांसा** ग्रन्थ (१) उत्तर-प्रदेश-शासनेन सहस्र-रूप्यकात्मको विशेष-पुरस्कारः, (२) डालमिया-ट्रस्ट-द्वारा २१००.०० रूप्यकात्मकः श्रीहरजीमल-डालमिया-पुरस्कारो, **वैदिक वाङ्मयमें भाषा-चिन्तन** इति द्वितीय-ग्रन्थे च उत्तर-प्रदेश-शासनेन ५००.०० रूप्यकात्मको विशेष-पुरस्कारश्चेति [illegible] पुरस्कारैः सम्मानितः ।

## पण्डितश्रीशिवनारायणशास्त्रिणोऽन्ये ग्रन्थाः

### प्रकाशिताः

(१) **निरुक्त-मीमांसा**—फर्वरी १९७० ई०; यास्कीयस्य निरुक्त-शास्त्रस्य सर्वाङ्गीणमध्ययनमत्र तथा व्यधायि, येन मुग्धो डॉ० श्रीसिद्धेश्वर-वर्मा, पंजाब विश्वविद्यालये, चण्डीगढ़े, इमं ग्रन्थम् 'अद्भुतम्' इति व्याहार्षीत्, उत्तर-प्रदेश-शासनेन स्वीयेन १०००.०० रूप्यकात्मकेन विशेष-पुरस्कारेण, डालमिया-ट्रस्टेन च स्वीयेन २१००.०० रूप्यकात्मकेन श्री हरजीमल डाल-मिया-पुरस्कारेण सम्मानितः। मूल्यम् रू० २५.००, पञ्च-विंशतिः।

(२) **वैदिक वाङ्मयमें भाषा-चिन्तन**—जनवरी १९७२ ई०; श्रेष्ठ-ग्रन्थत्वेनायं ग्रन्थोऽपि उत्तर-प्रदेश-शासनेनैव ५००.०० रूप्यकात्मकेन विशेष-पुरस्कारेण सम्मानितः। मूल्यं रू० १५.००, पञ्च-दश।

(३) **निरुक्त (१-२, ७ अध्याय)**—मार्च १९७२ ई०; छात्रोपयोगि-भूमिका-मूलपाठ-तदनुवाद-व्याख्यान-निर्वचनानुक्रमणी-युतः। प्रथमं संस्करणं समाप्तम्।

(४) **निरुक्तके पाँच अध्याय**—जुलाई १९७२ ई०; निरुक्तस्यादितश्च-तुर्णां सप्तमस्य चेति पञ्चानामध्यायानां वैज्ञानिकेन पाठ-शोधेन, हिन्दी-भाषयाऽनुवाद-व्याख्या-भूमिकाभिः, परिशिष्टेन, निघण्टु-पाठेन च सहितः प्रामाणिको ग्रन्थः। मूल्यं छात्र-संस्करणस्य रू० १६.००, षोडश; पुस्तकालय-संस्करणस्य रू० ४०.०० , चत्त्वारिंशत्।

(५) **गीता-भाष्य-नवाम्बरा**—जुलाई १९७३ ई० ; गीता-शाङ्कर-भाष्ययोराद्याध्याययोर्हिन्दी-भाषयाऽनुवादेन, भाष्य-मर्म-प्रकाशिन्या व्याख्यया विशदया भूमिकया च भूषितो ग्रन्थः। मूल्यं रू० ८.००, अष्ट।

(६) **तर्कसङ्ग्रह-तारोदय**—सितम्बर १९७३ ई०, हिन्दी-भाषया विश-देनानुवादेन, प्रामाणिकेन व्याख्यानेन, सरल-गम्भीरया भूमिकया च संवलि-तश्छात्राध्यापकोभयोपयोगी ग्रन्थः। मूल्यं रू० १०.००, दश।

### प्रकाशयिष्यमाणाः

(१) **हिन्दी-वैयाकरण-सिद्धान्त-कौमुदी** — भट्टोजिदीक्षितीय-वैयाक-रण-सिद्धान्त-कौमुद्याः शोधात्मिका, विस्तृता, हिन्दी-भाषा-निबद्धा व्याख्या प्रक्रता। तस्या भ्वादि-गणात्मकः प्रथमो भागः सम्पूर्णः।

(२) **Ancient Indian Phonetics**—शिक्षा-
विरचितः कतिपय-भागात्मको ग्रन्थः।

(२) **श्रुति-चन्द्रिका**—दिल्ली-विश्वविद्यालयीयायै एम
कक्षायै निर्धारित-वैदिक-सूक्त-व्याख्यात्मको ग्रन्थः।